

# Śri Yamunacharya's Siddhi Trayam WITH GOODHA PRAKASA

By Sri. U. Ve. Abhinava Desika UTTAMUR VIRARAGHAVACHARYA



SRI U. VE. ABHINAVA DESIKA
Uttamur T. VIRARAGHAVACHARYA
*Editor and Chairman*

UBHAYA VEDANTA GRANTHAMALA BOOK TRUST
[REGISTERED]
25, NATHAMUNI STREET, T.NAGAR
MADRAS - 17

॥ श्रीः ॥

श्रीपद्मावतीसमेतश्रीनिवासपरब्रह्मणे नमः

श्रीभगवद्यामुनमुनये नमः

# आत्मसिद्धिः

**प्रकृतिपुरुषकालव्यक्तमुक्ता यदिच्छामनुविदधति नित्यं नित्यसिद्धैरनेकैः ।**
**स्वपरिचरणभोगैः श्रीमति प्रीयमाणे भवतु मम परस्मिन् पूरुषे भक्तिभूमा ॥**

---

श्रीः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

## गूढप्रकाशः

श्रीवेङ्कटेशमसद्गुरूंश्च सर्वान् समाश्रये येषु ।
[1]यामुनशरणसमुच्छ्रित सुमनस्संदर्भसंस्तवो जयति ॥

भगवद्**बादरायण-बोधायन-द्रमिडाचार्यादि**प्राचीनाचार्यदर्शितः परमार्थः पश्चात्तनकतिपय-पृथङ्मतिप्रवर्तितविविधविसंष्ठुलार्थविक्षिप्तचित्तानां हृदि न प्रतिष्ठास्यतीति, पारम्पर्येण प्रवर्त्यमानं समुपसन्न-शिष्यजनोपदेशमात्रमपर्याप्तमाकलय्य प्रकृष्टयोगप्रत्यक्षितपरावरयाथात्म्यैः प्रपन्नजनसंतानप्रभवभूतैः उभय-वेदान्तप्रवर्तकैः परमकारुणिकै**र्भगवन्नाथमुनिभिः न्यायतत्त्वा**भिधानं शास्त्रं **योगरहस्यं**चेति ययो-र्ग्रन्थरत्नयोर्निर्माणेन निबन्धमुखेन परमार्थतत्त्वहितविज्ञानप्रतिष्ठानं प्रथममादरेण विदधे, तयोः स्वपिता-महपादानुगृहीतयोरेकतरस्मिन् सर्वार्थगर्भे गभीरे न्यायतत्त्वे **शास्त्रे** सर्वेषामपि प्राज्ञमणीनां सरसप्रवेशसंपि-पादयिषया तथैव भक्तिविज्ञानवैराग्यैः प्रथितः सरसकविताविहारभूमिः सकलपरमतमर्ममेदिकर्कशतर्कशास्त्र-प्रयोग-शास्त्रार्थवर्णनसमार्जितकथासङ्ग्रामजयलक्ष्मीसमेधितप्रभावो **भगवद्यामुनमुनिः** आत्म-परमात्म-तत्संबन्ध-तत्प्राप्ति-तत्साधनोपदेशकं **प्रकरणग्रन्थं** प्रारभमाणो निर्विघ्नपरिसमाप्तये विरचितं मङ्गलं वक्ष्य-माणार्थसंग्रहरूपतया ग्रन्थे निबध्नाति **प्रकृतीति । पुरुषः** बद्धजीवः। **व्यक्तं** प्रकृतिकार्यं महदादि । **मुक्ताः** विगलितबन्धा आत्मानः । **अनुविदधति** अनुवर्तन्ते स्वरूपस्थितिप्रवृत्तिषु । वक्ष्यति हि 'स्वाधीनत्रि-

---

1 **श्रीवेंकटेशः श्रीनिवासः। तदालये यामुनगृहमित्येकं स्थानम्। तत्र पुष्पाणि संभ्रियन्ते; मालारूपेण च ग्रथित्वा श्रीनिवासाय समर्प्यन्ते। तेषां संस्तवः परिचयस्तत्र श्रीनिवासे इत्येकोऽर्थः। तदा शरणं गृहम्; सुमनसः पुष्पाणि। येषु इत्यस्य श्रीवेंकटेशे गुरुषु चेत्यर्थः। तत्र यामुनाचार्यरूप-शरणबलात् सिद्धित्रयादिना प्राप्तोच्छ्रायाः सुमनसः विद्वांसो भाष्यकारादयः। तेषां संदर्भाः ग्रन्थाः तत्परिचयश्च गुरुषु विवक्षितः। एवं यामुनरूपशरण विषयकः संस्तवः—स्तोत्रमिति च।**

विधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्' इति । **नित्यसिद्धैः** नित्यसूरिभिः । सहेति शेषः । **प्रकृत्या**दयो नित्यसिद्धाश्चानुविदधतीत्यर्थः । **अनेकैरि**ति सूरीणां संसारिजीवापेक्षया त्रैगुण्यमभिप्रेतम् । सूरीणां परमे व्योम्नि पादत्रयमितत्वञ्च श्रुतम्, 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति । भोग्य-भोगस्थान-भोगोपकरणान्यपि नित्यविभूतौ नित्यसिद्धानि सन्ति । तान्यपि ग्राह्याणि । **श्रीमति** लक्ष्मीनित्ययुक्ते । अनेन यच्छब्दग्राह्यवस्तुनिष्कर्षणेन देवतान्तरे प्रकृत्यादिनियन्तृत्वभ्रमव्युदासः । **भक्तिभूम**शब्दः उपायभक्तिमिव साध्यभक्तिरूपां प्रपत्तिमपि वक्ति । अत्र आत्मनाम्, परमात्मनः, **नित्यमनुविदधती**ति तत्संबन्धस्यापृथक्सिद्ध्यादेः, **स्वपरिचरणभोगैरि**ति मोक्षाख्यतत्प्राप्तिप्रकारस्य, **भक्तिभूमे**ति तत्साधनस्य च कीर्तनात् वक्ष्यमाणार्थसङ्ग्रहो भाव्यः ।

इदमत्र बोद्धव्यम्—**न्यायसिद्धाञ्जने न्यायतत्त्वा**ख्यस्य शास्त्रस्य तत्र तत्रोपविंशाधिकस्थलेषु निर्देशात्, तत्रत्यकतिपयवाक्यश्लोकोपादानात्, क्वचित्क्वचित् पादनामसंकीर्तनात्, 'सप्तमे', 'अष्टमे' इत्येवमधिकरणसंख्याकथनात्, उपात्तसूक्तिशैलीपरिशीलनया च तच्छास्त्रं सर्वार्थगर्भं गभीरविस्तृतं वाक्यश्लोकोभयात्मकं परमतपरिमर्दि चेति, तत्र **ज्ञानपादः, प्रमातृपादः, करणपादः, प्रमेयपाद** इति पादचतुष्कमस्तीति, एकैकोऽपि पादो विषयभेदेन बह्वधिकरणात्मना विभक्त इति चावसीयते । आहुश्च, "यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः । तं प्रणम्य हरिं शास्त्रं न्यायतत्त्वं प्रचक्ष्महे" इति तत्राऽऽदौ श्लोक इति । **श्रीभाष्ये जिज्ञासाधिकरणे** अविद्यादूषणघट्टे 'ज्ञानरूपं परं ब्रह्म' इत्यादिना उपात्तास्त्रयः श्लोकाः नाथमुनिभिरुक्ता इति श्रुतप्रकाशिकायाम् । ते च नूनमत्रत्या एव स्युः । श्रीविष्णुचित्तीये तु श्रीयामुनार्यसूक्तितया ग्रहणमिव । एवमत्रात्मसिद्धावपि बहूनि **न्यायतत्त्वाधिकरणानि** नाम्ना निर्दिष्टानि । "प्रत्युक्तश्चायं प्रतिबिम्बवादः **प्रच्छन्नबाह्यमतप्रत्यादेशे**" इत्यात्मसिद्धिवचनमपि मन्ये अत्रत्यकिञ्चिद्भागपरं स्यात् । अहो बतेदृशं विशिष्टाद्वैतस्थापनेदम्परं कूटस्थकृतं भगवद्यामुनमुनिभगवद्रामानुजमुनिप्रभृतिमहनीयप्रवर्तकाचार्यमार्गदर्शि महच्छास्त्रम् अंशतोऽप्यर्वाचीनैर्न परिपालितमभूदिति । अथाप्यपरहयमुखावताराणाम् अशेषपरमतसमूलोन्मूलनेन अस्मत्सिद्धान्तप्रमाणप्रमेयनिष्कर्षणेन च निरवशेषमुपकृतवतां **श्रीमन्निगमान्तमहादेशिकाना**मिदं सामग्र्येण दृष्टिपथं प्राप्य स्थितमिति तावन्तं वा कालं सर्वं परिपालितमासीदिति कूटस्थाभीष्टसिद्ध्या कथंचिदाश्वसनीयम् ।

तस्यैतस्यायं प्रकरणग्रन्थः नूनं विशिष्य तत्रत्यप्रमातृपादवैशद्यार्थः । अत्र च आदौ आत्मपरमात्मतत्संबन्धतत्प्राप्तितत्साधनविषयविप्रतिपत्तिप्रदर्शनपूर्वं तच्छोधनप्रतिज्ञानात् ग्रन्थेऽस्मिन् तावानप्यंशो निरूपित इति निश्चीयते । उपलभ्यमानात्मसिद्धिभागे तु जीवात्मनिरूपणमपि न समग्रम् ; **देहेन्द्रिये**ति कारिकोत्तरार्धविवरणारम्भ एव शिष्टं सर्वं विनष्टम् ।

अत्र कश्चिदाक्षेपः—यद्येवं प्रतिज्ञानुरोधेनात्रैव परमात्मापि न्यरूपीति विमृश्यते, किमिति ईश्वरसिद्धिर्व्यरचीति । तत्र—

निरीश्वरवादनिराकरणेन तार्किकाद्दत-आनुमानिकेश्वरसिद्धिप्रकारमात्रकथनाय स ग्रन्थ इति कश्चित् परिहारः। अन्यस्तु—भगवता भाष्यकृता ईश्वरसिद्धौ दृश्यमानं सर्वं तथैव शास्त्रयोनित्वाधिकरणे पूर्वपक्षेऽनूद्य उपरि आनुमानिकत्वनिरसनेन श्रौतत्वसिद्धान्तविधानात् भगवद्यामुनमुनिग्रन्थेऽपि सैव रीतिः स्थितेति युक्तम्। कथं हि जीवात्मविषय एवानुमानानि प्रदूष्य, "आनुमानिकीमप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियाः संगिरन्ते" इति कथयन्नयं ईश्वरसिद्धिमानुमानिकीं मंस्यते; अतः प्रक्रमानुसारेण एकस्यैवाऽऽत्मसिद्धिग्रन्थस्य जीवात्मसिद्धिः ईश्वरसिद्धिश्चेति भागद्वयम्। तत्र चेश्वरसिद्धौ, विप्रतिपत्तिप्रदर्शनरीत्यनुसारेणानुमानेन निरीश्वरवादनिराकरणानन्तरं विविधाद्वैतमतपातञ्जलमतादि निरस्य श्रौतयथावस्थितेश्वरसिद्धिप्रकारः प्रतिपादितो भवेत्। अथवा 'आनुश्रविक एवेत्येके, आनुमानिकश्चेत्यन्ये, विशिष्टप्रत्यक्षसमधिगम्यश्चेत्यपरे' इति प्रमाणनिर्देशक्रमानुसारेणाद्वैतादिनिरासेन वैदिकेश्वरसिद्धिप्रकारमुपवर्ण्यानुमानतोऽपि एतत्सिद्धिम् अन्यदर्शितामारभ्य, 'तत्र कस्यचिदेकस्य' इत्यादिना पूर्वपक्षोपन्यासपुरस्सरं, 'अत्र ब्रूमः' इत्यनेनानुमानिकत्वमुपपाद्य, एवमपि एककर्तृकत्वाजीवकर्तृकत्वादिविषये दृढनिश्चयायोगात् व्यक्तिविशेषनिर्धारणायोगाच्च, 'तदुपपादनन्यायानुगताः पूर्वानुमानभेदाः.... आद्रियन्ते' इत्युपलभ्यमानात्मसिद्धिवचनरीत्या, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्यनुसाराच्चानुमानानां यावत्संभवं संभावनातर्कत्वेन ग्राह्यतामवबोध्य विशिष्टप्रत्यक्षसमधिगम्यत्वं पश्चादुपपादितं स्यात्। न केवलमेतावत्; तदुपरि तत्संबन्धतत्प्राप्त्यादिस्वरूपमपि शोधितं भवेत्। सर्वोपि भागः संप्रति प्रनष्टः। तदिदानीं आत्मसिद्धिः ईश्वरसिद्धिरिति पृथक्प्रबन्धता प्राप्तेति॥

अस्मिंश्च परिहारद्वये प्रायः प्राथममेव प्राज्ञाः रोचयेरन्; यतः सिद्धित्रयमिति चिरन्तनी प्रसिद्धिः। श्रीमति रहस्यत्रयसारेऽपि गुरुपरम्परासारे, एतदनुगृहीताः प्रबन्धाः आगमप्रामाण्यं, पुरुषनिर्णयः, आत्मसिद्धिः ईश्वरसिद्धिः संवित्सिद्धिरिति सिद्धित्रयम्, श्रीगीतार्थसंग्रहः स्तोत्रं चतुःश्लोकी चेत्यष्टाविति स्पष्टमुक्तम्। अतः यथा पुरुषनिर्णयः परमात्मपरोऽपि नारायणपारम्ये श्रुतितात्पर्यवर्णनेदम्परः पृथग्भूतः, तथेश्वरसिद्धिरप्यनुमानादिना तत्साधकः पृथग्भवितुमर्हति। यद्यपि अत्रत्यद्वितीयकारिकाद्यनुसारेण आत्मसिद्धावेव परमात्मनिरूपणमेष्टव्यम्; वक्ष्यति चात्रैव, 'परमात्मनिरूपणेऽतिनिपुणमुपपादयिष्यामः' इति—अथापीश्वरसिद्ध्युक्तावशिष्टं सर्वं परमात्मविषयेऽभिधायेतरांशस्य तत्रैव द्रष्टव्यत्वमुपदिश्य तदुपरि वक्तव्यसंबन्धप्राप्त्यादिकं विमृश्य आत्मसिद्धिः समापिता भवेदिति ग्राह्यमित्यलमनुपलभ्यमानगोचरानिष्कृष्टविमर्शेन। आगमप्रामाण्येऽपि ईश्वरो न्यरूपि। संवित्सिद्धिः पृथग्ग्रन्थ इत्यत्र तु नैव विशयः। यदुच्यतेऽत्रैव, 'प्रकाशश्च चिदचिदशेषपदार्थसाधारणो धर्म इति संवित्सिद्धावेव साधितम्' इति, 'भ्रान्त्यधिकरणसिद्धान्तारम्भे, संवित्सिद्धौ चानुसंधातव्यम्' इति च। अत एवाऽऽत्मसिद्धेः प्राक्कृता संवित्सिद्धिरित्यपि ध्येयम्। नैवमीश्वरसिद्धिः प्राक्तनी। तत्रात्मसिद्ध्यनुवादात्। अत्र धीप्रकरणे संवित्सिद्ध्युक्तसर्वांशनिरूपणस्य प्रसक्तत्वेऽपि प्राक्कृतत्वादेव अत्रानतिविस्तर इति॥

विरुद्धमतयोऽनेकाः सन्त्यात्मपरमात्मनोः ।
अतस्तत्परिशुद्ध्यर्थम् आत्मसिद्धिर्विधीयते ॥ २ ॥

संमतं हि सर्वसमयेषु, 'आत्मज्ञानं निःश्रेयसहेतुः' इति । श्रूयते च, 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति', 'आत्मानञ्चेद्विजानीयात्', "तरति शोकमात्मवित्', 'ब्रह्मविदाप्नोति परम्' इत्यादिः परावरात्मतत्त्वज्ञानस्यापवर्गसाधनत्वं प्रतिपादयन् वेदान्तवाक्यगणः ।

तत्रास्मिन् आत्मनि परस्मिंश्चानेकविधाः विप्रतिपत्तयस्तीर्थकराणाम् । तत् यथा—

(जीवात्मविषयविप्रतिपत्तिः)

आत्मविषये तावत्—देहमेव केचिदात्मानमाचक्षते ; इन्द्रियाण्यन्ये ; मन इत्यन्ये ; प्राणमपरे ; अध्यस्तज्ञातृभावम् अनहङ्कारं बोधमात्रमितरे ; देहेन्द्रियमनःप्राणबोधविलक्षणम्

---

**विरुद्धमतयो** विप्रतिपत्तयः । विरुद्धमतय इत्यत्र **विरुद्धख्यातय** इति, **यतो विमतय** इति च पा० । **अनेका** इति स्वरूपप्रमाणपरिमाणादिमुखभेदतोऽप्यनेकत्वं विवक्षितम् । **तत्परिशुद्ध्यर्थम्** तयोरात्मपरमात्मनोः अप्रतिपत्त्यन्यथाप्रतिपत्तिप्रतिक्षेपियथावस्थितप्रतिपत्तिसंपत्तये अप्रतिपत्त्यादिक्षेपायेति वा । एतत्कारिकार्थविस्तरः **संमत**मित्यारभ्य आकारिकान्तरारम्भात् । काकदन्तपरीक्षावैलक्षण्यबोधाय बाह्याबाह्यसर्वस्वीकारेण विप्रतिपत्तिप्रदर्शनौचित्याय चाऽऽह **संमतं** हीति । **पृथगि**ति । "सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे" इति पूर्वार्धम् । बृहन्ते-बृहति । हंसः-जीवः । **आत्मानं** जीवं प्रेरयितारं परमात्मानञ्च **पृथक्** मिथो भिन्नतया मत्वेत्यन्वयार्थः । **तेन** परमात्मना **जुष्टः** प्रीतिविषयीकृतः । **आत्मान**मिति । "आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" इति पूर्णवाक्यम् । **मन इती**ति । पूर्वापरानुसारादत्रापि इतिकरणं न युक्तमिव ; अथापि प्रामाणिकं यत् मनः तद्व्यतिरिक्ते मनस्त्वारोपेण मनआत्मवादो वादिभिः कृत इति ज्ञापयितुं तत् ।

क्रमप्राप्तं बाह्यबौद्धमतमाह **अध्यस्तेति** । शाङ्करमतं तु, 'अन्ये तु ज्ञानानन्दस्वभावम्' इति वक्ष्यति । वक्ष्यमाणोऽन्तःकरणोपाधिकरागद्वेषाद्यवभासोऽद्वैतमतेऽप्यस्ति । न तु बौद्धमतेऽन्यगतरागादेरात्मन्यारोपः, बाह्यापलापित्वात् बौद्धस्य रागद्वेषादेर्विज्ञानानतिरेकात् । तदुक्तं **तत्त्वकौमुद्याम्** (१०का) 'येत्वाहुः विज्ञानमेव हर्षविषादमोहशब्दाद्यात्मकम्' इति । अयमेव चात्मातिरिक्तसर्वाभावो **बोधमात्र**मिति मात्रपदेन विवक्षितः । अध्यस्तज्ञातृभावमनहङ्कारमिति ज्ञातृत्वाध्यासाहम्प्रत्ययाविषयत्वे उक्ते प्रच्छन्नप्रकटबौद्धयोस्तुल्ये । अत्रैतत्कथनं बौद्धमतापेक्षया नैयायिकमतस्य आत्मनि ज्ञातृत्वाहमर्थत्वे अनुमन्यमानस्यासदन्तरङ्गत्वज्ञापनार्थम् । यद्वा जगदपलापाविशेषात् एकहेलयैवात्र प्रच्छन्नप्रकटबौद्धयोर्ग्रहणम् ; तथैव विस्तरे दर्शनात् । एवंसति उपरि 'ज्ञानानन्दस्वभावम्' इति मीमांसकैकदेशिमतम् । यदाहुः—'निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च यः । यच्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते'

आकाशादिवदचित्स्वभावम् आगन्तुकबोधसुखदुःखाद्यसाधारणगुणाधारं अहङ्कारगोचरमपरे । अपरे तु बोधैकस्वभावमेव, स्वभावधवलमिव स्फटिकमणिम् उपधानविशेषापादितारुणिमगुणादिनिर्भासम्, अन्तःकरणोपधानापादितरागद्वेषसुखदुःखाद्यशिवगुणनिर्भासम् अनुदितानस्तमितस्वरूपप्रकाशं स्वयंज्योतिषमिममभिदधति ; अन्ये तु ज्ञानानन्दस्वभावम् ; आश्रयानुकूल्यप्रतिलब्धानन्दसुखादिव्यपदेशबोधविशेष एवास्य स्वाभाविक इत्यन्ये(१) ।

(जीवात्मनि प्रमाणादिविषयविप्रतिपत्तिप्रदर्शनम्)

तथा—अनुमानसमधिगम्यः, आगमैकवेद्यः, मानसप्रत्यक्षवेद्यः, ग्राहकतयैव सकलविषयवित्तिषु प्रत्यक्षः, ज्ञानस्वभावतयाऽनुदितानस्तमितस्वरूपप्रकाशः स्वयंज्योतिः ईदृशोऽप्यागमानुमानयोगजप्रत्यक्षैः स्वेतरसकलविलक्षणस्वाभाव्येन विशद-विशदतर-विशदतमतया [विदितः] अन्ततो यथावदपरोक्ष्यते इति । तथा परममहान्, अणुपरिमाणः, शरीरपरि-

---

(मी. वा.) ,इति । तथाच ज्ञानानन्दगुणमिति तदर्थः । वैनाशिकमतमुक्त्वा अर्धवैनाशिकवैशेषिकमतमाह देहेति । इदं पार्थसारथिमिश्रादिमीमांसकमतमपि । अहङ्कारगोचरं अहम्प्रत्ययविषयम् ; अहमर्थमिति यावत् । सांख्यमतमाह अपरेत्विति । वेदासन्निकृष्टपूर्वमतापेक्षया सन्निकृष्टमतपार्थक्यसूचनाय पृथक्तिङन्तप्रयोगेणैतदारभ्य पृथग्वाक्यकरणम् । बोधैकेत्येकपदेनाऽऽनन्दस्वरूपत्वस्य बोधधर्मकत्वस्य च व्यवच्छेदः । रागद्वेषादिकोटौ ज्ञानस्यापरिगणनात् न रागादिवत् चैतन्यमन्यनिष्ठमारोप्यते इति द्योत्यते । 'तदा द्रष्टुस्स्वरूपेणावस्थानम्' (यो. सू.) इत्यत्र च वाचस्पत्यम्, 'स्वरूपस्यचाभेदेऽपि भेदं विकल्प्याधिकरणभाव उक्तः' इति । उपधानविशेषः जपाकुसुमसन्निधानम् । ज्ञानानन्दस्वभावमित्यस्याद्वैतमतत्वे स्वभावधवलमित्यादेरत्रानुषङ्गः । एवमुपर्यपि, सिद्धान्तेपि रागसुखादेर्मनोधर्मत्वस्य वक्ष्यमाणत्वात् । तस्य मीमांसकमतत्वे तु न तदनुषङ्गः । एवमुपर्यपि ; नानुषङ्गः । इदमुपरिष्टाद्व्यक्तीभविष्यति । मीमांसकमते ज्ञानातिरिक्त आनन्दः ; सिद्धान्ते तु ज्ञानमेवानन्दः । आश्रयानुकूल्येति । आश्रयं प्रत्यनुकूलत्वात् बोध एवानन्दादिव्यपदेशं प्रतिलभते । अनुकूलं ज्ञानं ह्यानन्दः । बोधः किंविषयकोऽनुकूल इति त्वनुभवप्रमाणाभ्यामवसातव्यम् । सिद्धान्ते आत्मन्यनुभूत्यात्मकबोधरूपत्वस्यानिष्टत्वात् तत्र ज्ञानव्यवहारस्यौपचारिकतायाः वक्ष्यमाणत्वाच्च बोधरूपत्वानुक्तिः ; स्वयञ्ज्योतिष्ट्वं तु समनन्तरमुच्यत एवेति स्थितनिर्वाहप्रकारः । अत्र अन्येत्वित्यारभ्य कृत्स्नमेकं मतमिति युक्तमिति संभावना । तदनुकूलः द्वितीयं अन्य इति पदं विना पाठोऽपि क्वचित् लक्ष्यते, 'अन्ये तु ज्ञानानन्दस्वभावमिमं मन्यमानाः अस्याश्रयानुकूल्य....स्वाभाविक इति' इति मद्रनगरराजकीयपुस्तकभाण्डागारकोशे (४९३३), आन्ध्रमुद्रणे अधस्ताच्च । ज्ञानस्वभावतया ज्ञस्वाभाव्येन । वक्ष्यति चेदम् । अपरोक्ष्यत इत्यत्रागमानुमानयोरनन्वयात् मध्ये विदित इत्येवं पदमपेक्ष्यते । अनुमानस्य श्रुतमननरूपत्वे ततो ज्ञानं विशदतरम् । क्वचिदनुमानं पूर्वमपि निर्देक्ष्यते । अन्ततः मुक्तौ । अन्ततः-भावनाप्रकर्षपर्यन्त इति वाऽर्थः ; तथोपरि

**माणः, स्वतःपरिमाणरहितोऽपि व्याप्यवस्तुपरिमितिकृतपरिच्छेद इति, व्याप्तिरपि चैतन्यमात्रेण स्वरूपेण [मात्रेणैव न स्व(?) रूपेण] इति—तथा क्षणिकः, यावच्छारीरोष्मस्थायी, आप्राकृतप्रलयावस्थायी, आमोक्षस्थायी, कूटस्थो नित्य इति—सर्वशरीरेषु एकः, प्रतिक्षेत्रं नानाभूत इति च तथातथा प्रतिपद्यन्ते ।**

(परमात्मविषयविप्रतिपत्तिप्रदर्शनम्)

**तथा परमात्मविषयेऽपि—केचित् समस्तवस्तुसाक्षात्कारिणं सर्वशक्तिमीश्वरमेव**

---

दर्शनात् । उपरि **नित्यो व्यापीति**निर्देशात् कालावच्छेदपरीक्षाया एव पूर्वत्वाच्च विप्रतिपत्तिस्थलेपि 'तथा क्षणिक' इत्यादिकं पूर्वं, पश्चाच्च, 'तथा परममहान्' इत्यादिकं स्थितं स्यात् । अथवा क्रमानादरः स्यात् । 'व्याप्तिरपि चैतन्यमात्रेण स्वरूपेण' इति पाठो दृश्यते । अत्र पक्षद्वयमभिमतं चेत्, वाकार आवश्यकः । एवं स्वरूपपक्षस्यान्ते निर्देशो न युक्तः, सिद्धान्त्यनभिमतत्वात् । **श्रुतप्रकाशिकायां** जिज्ञासाधिकरणे देहेन्द्रियेत्याद्यत्यकारिकानुवादिभाष्यव्याख्यानावसरे, "ज्ञानेन व्याप्तिरात्मसिद्धावेवोच्यते, व्याप्तिरपि चैतन्यमात्रेणैव, न रूपेणेति" इत्युक्तत्वात् अन्यत्र तद्वाक्यानुपलम्भात् औचित्याच्चात्रैव तत् नच्घटितं वाक्यमित्यालोच्यते । ननु स्वयमेवात्मनोऽविभुत्वस्य हृदयायतनत्वस्य च वक्ष्यमाणत्वात् अणुत्वस्य सिद्धान्त्यभिमतत्वाच्च कथं **स्वतः परिमाणरहितो**ऽयमित्युच्यते ? सत्यम्—अथापि स्वतश्शरीरादिपरिमाणरहितोपीति तदर्थः । अथवा विभूनां परिमाणाभावस्याऽऽ**गमप्रामाण्ये** उक्तत्वात् अणोरप्यस्य चैतन्यरूपेण विभुत्वात् **स्वतः** स्वचैतन्यविशिष्टवेषेण परिमाणरहितोपीत्युच्यते । यद्वा सिद्धान्ते नैयायिकादिमत इव परिमाणरूपगुणान्तरास्वीकारस्य न्यायतत्त्वानुसारि**न्यायसिद्धाञ्जनोक्त**त्वात् परिमाणानास्थया तथोक्तिरिति । अत्र सिद्धान्त्यभिमताणुपरिमाणत्वस्य शरीरपरिमाणत्वपक्षात्पूर्वं कथनवत् चैतन्यमात्रेणेति सिद्धान्तिपक्षस्यापि पूर्वं कथनसंभवात् स्वरूपेणेति पक्षान्तरपरमेवास्तु ; श्रुतप्रकाशिकादृष्टं वाक्यं तु आत्मसिद्धौ स्थलान्तरे स्यादिति मन्तुमवसरोऽस्ति । तथापि सर्वत्र सिद्धान्तिपक्षस्यैवान्ते कीर्तनादिहाप्येवम् । तथाच गुणत्वाद् ज्ञानस्य व्याप्त्यनर्हत्वमभिमत्यैवात्माणुत्वं वदतां नित्योपलब्ध्यनुपलब्धिप्रसंगादिना परममहत्त्वमनिच्छतां मतं प्राक् 'अणुपरिमाण' इति प्रस्तुत्य, 'पादे मे वेदना, शिरसि सुखम्' इत्युक्तानुसंधानोपपत्तयेऽणुत्वत्यागिनां शरीरपरिमाणपक्षमुपन्यस्य, ततः व्याप्यवस्त्वनुरूपपरिमाणरहितोपि ज्ञानव्याप्तिस्वीकारात् कृत्स्नशरीरसुखाद्यनुभावी भवितुमर्हतीति सिद्धान्तिपक्षेण निगमनमिति । शरीरपरिमाण इति क्वचित्कोशे न । तदा सिद्धान्तिपक्षोऽन्ते इति निर्बाधम् । **क्षणिक** इति । अत्रात्मानित्यत्ववादिनश्चतुर्विधा इति सर्वार्थसिद्धिरनुसन्धेया (जी. १७) स्थैर्यञ्चेदिति श्लोके । अत्र **चकार** एवानुक्तसमुच्चायकः स्वतस्सुखित्वादिविकल्पं समुच्चिनोति । **तथातथे**ति पूर्वोक्तसर्वप्रकारपरामर्शी तद्विकल्पस्यापि परामर्शकः । **तथातथे**त्यनेन स्वतस्सुखित्वतदभावग्रहणम् । **प्रतिपद्यन्ते** इति । एवं तत्तद्वादिप्रतिपत्तिकथनात् विप्रतिपत्तिर्दर्शिता भवति ।

नाभ्युपगच्छन्ति । अभ्युपगच्छन्तोऽप्येके प्रत्यस्तमितमितिमानमातृमेयेश्वरेशितव्यादिभेद-विकल्पकूटस्थविज्ञानैकरसम् अनाद्यविद्योपदर्शितवियदादिभेदावच्छिन्नज्ञानैश्वर्यादिमहिम-विकल्पतया काल्पनिकमाचक्षते । अपरे तु यथोक्तस्वरूपमेवाविद्योपधानेन तद्गुणसारतया प्रकल्पितब्रह्मादिस्थावरपर्यन्तविविधजीवभेदं स्वाधीनविचित्रविवर्तस्वभावमायोपहिततया समासादितसार्वज्ञ्यादिसंपदमुपहितमिममभिदधति । तथाऽन्ये प्रकृष्टसत्त्वोपादाननिमित्त-स्वतन्त्रप्रधानपरिणामविशेषमात्रनियमनिर्वाहितसर्वैश्वर्यमर्यादमाद्रियन्ते । अनुपहितमपि परिणामिनमपरे प्रतिपेदिरे । अपरिणामिनमपि स्वमायांशभूतविचित्रान्तःकरणदर्पणतल-प्रतिबिम्बिततया प्रतिपन्नविश्वतैजसप्राज्ञभावं तमेकमेव चेतनमितरे रोचयन्ते । अन्ये तु स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं स्वाभाविकनिरवधिकातिशयज्ञानबलैश्वर्य-वीर्यशक्तितेजःप्रभृतिसकलकल्याणगुणगणमहार्णवं पुरुषविशेषमीश्वरमातिष्ठन्ते ।

(तन्मूर्त्यादिविप्रतिपत्तिः)

तथा तद्विशेषेऽपि हरिहरविरिञ्चभास्करात्मना अनभिमततत्तन्मूर्तिपरित्यागेन च चतु-

---

मिथ्यावादिमतद्वयं क्रमेणाह **अभीति** । **आदिना** ईशनग्रहणम् । एवंरूपाणां भेदानां **विकल्पो** वैचित्र्यम् ; तस्य **प्रत्यस्तमितत्वं** परमार्थतोऽसत्त्वम् । पक्षद्वयेऽपि जीवेश्वरयोर्मिथ्यात्वेपि द्वितीयपक्षे अनाद्य-विद्यावत् प्रपञ्चहेत्वनादिमायाङ्गीकारादविद्योपहितजीवतुल्यं मायोपहितेश्वरः सेद्धुमर्हति । ब्रह्मविषयक-जीवाश्रिताविद्यावादिप्रथमपक्षे तु अनाद्यविद्यासिद्धेन जीवेन ब्रह्मणि प्रपञ्चेश्वरकल्पना क्रियत इति तस्येश्वरस्य व्यवहारकाले आस्तिकाबाध्यत्वेपि जीवकल्पितप्रातिभासिकमुक्तिकालनिवर्त्यकतिपय-शुक्तिरजततुल्यता दुर्वारेत्याशयेनाह **काल्पनिक**मिति । **तद्गुणसारता** आरोपिताविद्यक-कर्तृत्वादिकत्वम् । स्वभावमायेत्यत्र **स्वभावं मायेति** पा० । सकलजीवात्मवत् शुद्धचिन्मात्ररूप एवेश्वरः प्रकृतिपरिणामशुद्धसत्त्वचित्तोपहितोऽस्पृष्टाविद्यो जगदुद्दिधीर्षया संप्रदायप्रवर्तकोऽनुग्राहकश्च भवति । प्रलय-प्राक्क्षणे शुद्धसत्त्वचित्तसत्ताकाले, 'अहमेतावन्तं कालमतीत्य पुनः प्रवर्तिष्ये' इतीश्वरकृतप्रणिधानवशात् प्रलीनं शुद्धसत्त्वं प्रलयान्ते पुनः प्रकृतितः पृथग्भवति । यथा अहं तदानीमुत्थास्यामीति प्रणिधान-वशादभीष्टसमये सुप्तचित्तप्रबोधः, तद्वत् । अतः प्रधानपरिणामभूतचित्तबलसिद्धं प्रलयेऽनीश्वरस्य सृष्टावैश्वर्य-मिति पातञ्जलाः ; तन्मतमाह **तथान्ये** इति । प्रकृष्टसत्त्वरूपमुपादानकारणं **निमित्तं** जनकं यस्य परिणामविशेषस्य तन्मात्रे **नियमेन** संकल्पव्यवस्थानुसारेण निर्वाहिता सर्वैश्वर्यमर्यादा यस्य तादृशमित्यर्थः । **अनुपहितमपीति** । सन्मात्रं ब्रह्म समुद्र इव फेनतरङ्गबुद्बुदात्मना चिदचिदीश्वररूपेण परिणमत इति । प्रतिबिम्बेश्वरपक्षमाह **अपरिणामिनमपीति** । विश्वतैजसादिनिरूपणं **माण्डूक्यो**पनिषदि । चतुर्मूर्तिपक्ष-मुक्त्वा ऽन्यादिपक्षानाह **अनभिमतेति** । **चतु**रिति 'विष्णुर्ब्रह्मा च रुद्रश्च विष्णुरेव दिवाकरः । तस्मात् पूज्यतमं नान्यमहं मन्ये जनार्दनात्' इति मूर्तिचतुष्टयमात्रग्राहि **तात्पर्यचन्द्रिको**द्धृतं (गी. ८-१३)

स्त्रिद्व्यकमूर्तितया विवदन्ते । मूर्तिविशेषविषयाश्च नित्यत्वानित्यत्वभौतिकत्वाभौतिकत्व-स्वार्थ[त्व]परार्थत्वादिवितर्काः प्रादुर्भवन्ति ; परिजनस्थानादिगोचराश्च ।

(तत्प्रमाणविप्रतिपत्तिः)

तथा प्रमाणतोऽपि ।—आनुश्रविक एवेत्येके । आनुमानिकश्चेत्यन्ये । विशिष्टप्रत्यक्ष-समधिगम्यश्चेत्यपरे ।

(आत्मपरमात्मसंबन्धविप्रतिपत्तिः)

तथा आत्मपरमात्मनोः संबन्धेऽपि—[1]अनाद्यविद्योपादानभेदास्पदोऽयम् ईश्वरेशितव्यतादिरूपः संबन्धः; [2]परमार्थतस्त्वेकं तत्त्वमिति केचित् । [3]व्यतिरेकाभावेऽप्यतिरिक्तो जीव इत्यन्ये । स्वतस्तु ऐक्यम् , उपाधितो भेद इति [4]विशिष्ट-स्वरूपभावेन भिन्नाभिन्नत्वमितरे । नानात्वे सत्येषामभेदो नामान्वयः अंशांशिभावलक्षण[5]ः, समवायः [6]परतन्त्रतालक्षणः, शेषशेषित्वरूपः स्वस्वामिभावः भृत्यस्वामि [भाव ?] लक्षण इति च नानाविधाः वादाः ।

(तत्प्राप्तिविषयविप्रतिपत्तिः)

तथा परमपुरुषार्थभूते ब्रह्मप्राप्तिलक्षणमोक्षेऽपि—[7]स्वरूपोच्छित्तिलक्षणः, अविद्याऽस्तमयलक्षणः, निश्शेषवैशेषिकात्मगुणोच्छेदलक्षणः, कैवल्यरूपः, तद्भावसाधर्म्यलक्षणः, तद्गुणसंक्रान्तिलक्षणः, तच्छायापत्तिलक्षणः, सांसिद्धिकानन्दादिस्वरूपाविर्भावलक्षणः, तद्गुणानुभवजनितनिरतिशयसुखसमुन्मेषोपनीतात्यन्तिकतत्किंकरत्वलक्षण इति तथा तथा विवदन्ते ।

---

वचनम् । 1. **अनादी**त्यादि अनाद्यविद्यारूपोपादानविशेषमूलक इत्यर्थकम् । 2. परमार्थतस्त्वेकत्वश्रुतेरेकं तत्त्वमिति पा० . 3. **व्यतिरेको** विरहः । परमात्मानं विहाय जीवस्थित्यभावेऽपि तदविभक्तोऽयं ततो भिन्न इति । सिद्धान्ते नाव्यतिरेकित्वमात्रम् , तस्य परं प्रतीव कालादिकं प्रत्यपि भावात् । यद्वा सन्मात्रैकद्रव्यतया विशेषभेदाभावेपि सन्मात्रात् विकृतयोर्जीवेश्वरयोर्भेदः, अग्निविस्फुलिङ्गयोरिव । 4. विशिष्टभावेन भिन्नत्वम् , स्वरूपभावेनाभिन्नत्वम् । **नानात्व** इति । अयं सिद्धान्तः । **अन्वयः**इत्यनेन 'शब्दप्रतीताभेदनिर्वाहप्रकार एवोच्यते; न तु वस्तुनोरभेदः' इति सूच्यते । 5. **अंशांशिभावलक्षणसमवाय** इति पा० . 6. ननु द्रव्ययोरनयोः कथं समवाय इत्यत्राह **परतन्त्रते**ति । वक्ष्यति संयोगविशेषातिरिक्तः समवायो नास्तीति । अतो नित्यपारतन्त्र्यगर्भस्संयोग एव समवायः । अत्रोत्तरोत्तरं पूर्वपूर्वविवरणरूपम् । अभेदो नामान्वय इत्यादिकमवान्तरानेकमताभिप्रायेणापि स्यादित्याहुः । 7. **स्वरूपोच्छित्ति**पक्षो बौद्धस्य । **कैवल्य**मन्तःकरणाद्यनुपहितत्वादिरूपं सांख्यमतम् । **तद्भावे**त्यादौ तच्छब्दो ब्रह्मपरः । तद्भावरूपं साधर्म्यम् ; न तु सिद्धान्त इव गुणकृतं साधर्म्यम् । **स्वरूपाविर्भावलक्षणः** इति पृथक्करणात् उपरितनसिद्धान्तपक्षेणैकीकारे **लक्षण** इति पदस्य व्यर्थत्वात् इदं माध्वमतम् । तैरेतावत एव नियतत्वस्वीकारात् ; भगवदनुभवकैंकर्ययोस्तन्मते नियतत्वाभावात् ।

(मोक्षसाधनविषयविप्रतिपत्तिः)

**तत्साधनतोऽपि — कर्मयोगलभ्यः, ज्ञानयोगलभ्यः, अन्यतरानुगृहीतान्यतरलभ्यः, उभयलभ्यः, उभयपरिकर्मितस्वान्तस्य ऐकान्तिकात्यन्तिकभक्तियोगलभ्य इति ॥**

**तत् एवम् अनवसितविशेषविमर्शकजनविमतिदर्शनात् तत्तत्पक्षसाधनबलाबलानवगमाच्च ततस्ततः संदिहानाः प्रेक्षावन्तः न तावत् परमपुरुषार्थाय घटेरन्, यावत् अयमात्मा परमात्मा च स्वरूपतः प्रमाणतः संबन्धतः प्राप्तितः तत्साधनतश्च न निर्णीयेतेति तत्प्रतिबोधायेदमारभ्यते ॥**

(स्वप्रबन्धस्यागतार्थत्वम्)

**यद्यपि भगवता बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि । विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता । विस्तृतानि च तानि गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणापि — तथाऽपि आचार्यटङ्क-भर्तृप्रपञ्च-भर्तृमित्र-भर्तृहरि-ब्रह्मदत्त-**

---

१. अत्र भगवद्बोधायनानुक्तिः स्वयं तद्वृत्तेः साक्षाददृष्टत्वात् स्यात् । अत एव हि स्वयं सूत्रभाष्यं निबन्धुकामैरप्येभिर्न्नूनं तत्संपादनार्थविलम्बेन स्वान्त्यसमये समापतिते श्रीभगवद्रामानुजमुखेन तत् प्रतीक्षितमासीत् । ते च स्वान्तेवासिश्रीकूरेशसहिताः उत्तरेषु क्वचित् कथञ्चित् बोधायनवृत्तिं समग्रां समीक्ष्य द्रमिडभाष्ये तदैकरस्यमनुभूय श्रीभाष्यं प्राणैषुरितीतिवृत्तविदः । सूच्यते चेदमादौ श्रीभाष्ये, 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते'इति । **विवृतानि च तानी**ति वाक्येन द्रमिडभाष्यं ब्रह्मसूत्रस्याप्यस्तीति ज्ञायते । भोक्त्रापत्त्यधिकरणादौ श्रीभाष्योपात्तमत्रत्यमेव स्यात् । अयं **द्रमिडाचार्यः** छान्दोग्यव्याख्यारूप — **ब्रह्मनन्दिकृत-' वाक्यग्रन्थो**परि भाष्यकर्ता । वाक्यशब्दो वार्तिकपर्यायः । यस्य भाष्यस्योपरि वामनटीकेति श्रुतप्रकाशिकातो ज्ञायते (श्रीभाष्यद्वितीयश्लोके,लघुसिद्धान्ते च) । **भगवता श्रीवत्साङ्कमिश्रेणे**ति पुरस्कृतान्मिश्रादन्य एव सितासितनिबन्धकारिपङ्क्तिनिविष्टः श्रीवत्साङ्क इति अनुक्तिसिद्धम् ।

**टङ्कः** प्रशंसितो यतिराजसप्ततौ 'निरातङ्काः टङ्कद्रमिडगुहदेवप्रभृतयः' इति । एवं **वेदार्थसंग्रहे**ऽपि (१५४ पु.), भगवद्बोधायन-टङ्क-द्रमिड-गुहदेव-कपर्दि-भारुचिप्रभृति......व्याख्यानेत्यादि । एवंभूतस्य सितासितनिबन्धनकारिमध्यप्रवेशनमिह परममुख्यार्थेऽवैषम्येप्यन्यत्रान्यथात्ववादिना स्यात् । अत्राप्या**चार्ये**ति विशेषणेन टङ्कस्यांशतः प्रशंसाऽपि स्यात् । अत्र सितनिबन्धनकारिणः केचित् ; असितनिबन्धनकारिणश्चान्ये इत्यप्यभिप्रयन्ति । अद्वैतप्रत्यर्थित्वमात्रेण वेदार्थसंग्रहादौ तत्कीर्तनमिति च युक्तम् ।

**भर्तृप्रपञ्चो**ऽद्वैती स्यात् । तदुक्तमनूक्तं प्रकरणप**ञ्चिकायाम्** (८. प्र.) 'यत्त्विदं **प्रपञ्चेन** साधितम्-प्रत्यक्षादिविरोधेऽप्याम्नायस्य बलीयस्त्वम्, तद्वशेन प्रत्यक्षादीनामेव भ्रान्तता कल्पनीयेति' इति । '**न दृष्टेर्द्रष्टारं पश्येः**' (बृ. ३ ४ २) इत्यत्र **शाङ्करो**पनिषद्भाष्ये **प्रपञ्चकृतं** व्याख्यानं दूषितमस्ति । तदौचित्यविमर्शश्चास्मत्कृत**परमार्थप्रकाशिका**ग्रन्थे (१७४ पु.) कृतो द्रष्टव्यः ।

शङ्कर—श्रीवत्साङ्क-भास्करादिविरचित-सितासित-विविध-निबन्धनश्रद्धाविप्रलब्धबुद्धयः, न यथावत्, अयथा च प्रतिपद्यन्ते इति तत्प्रतिपत्तये च युक्तः प्रकरण[1]प्रक्रमः। तत्र—

(जीवात्मनिरूपणम्)

[2]देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतस्सुखी ॥ ३ ॥

(देहात्मभावपूर्वपक्षः। तस्य प्रत्यक्षसिद्धत्वम्)

ननु देहमेवाऽऽत्मानं प्रत्यक्षतः प्रतिपद्यामहे। अहं जानामीति ज्ञाता ह्यात्मा अहमिति चकास्ति। देहश्चाहङ्कारगोचरः; स्थूलोऽहं, कृशोऽहमिति दर्शनात्। देहस्य हि स्थौल्यादियोगः। अतस्तत्स[3]मानाधिकरणतयाऽयमहङ्कारः शरीरालम्बन इत्यवश्याश्रयणीयम्। इतरथा सकललौकिकपरीक्षकव्यवहारोपरोधश्च। [4]न चायं लाक्षणिको व्यवहारः; [5]मुख्यवृत्तिभूमेः पृथगसिद्धत्वात्। न[6]चानेकावयवयोगिशरीरालम्बनत्वे ज्ञातृत्वमासस्य, तदीय-

---

भर्तृमित्रं मनसिकृत्यैवाऽऽदौ श्लोकवार्तिके 'प्रायेणैव हि मीमांसा लोके लोकायतीकृता' इति, 'इममेव च संस्कारं श्रोत्रग्रहणकारणम्। केचित्तु पण्डितंमन्याः श्रोत्रमित्यभिमन्वते (१-६-१३०) इति चोक्तमिति न्यायरत्नाकरादवसीयते। तदयं नित्यनिषिद्धयोरिष्टानिष्टं फलं निषेधति, श्रोत्रेन्द्रियञ्च यथावन्नेच्छति। वेदान्तवादोऽस्य कीदृश इति विमृश्यम्। भर्तृहरिः स्फोटस्थापकः शब्दाद्वैतवादी प्रसिद्धः। ब्रह्मदत्तो भेदाभेदवादीति परमतभङ्गे भास्करभङ्गाधिकारे। सर्वार्थसिद्धौ च जीवसरे (१६) ब्रह्मदत्तादिभिरुक्तं जीवानां स्वरूपतस्सृष्टिसंहृतिविषयत्वमिति। तदयं यादवप्रकाशतुल्यः।

1. 'न्यायतत्त्वशास्त्रप्रकरणं ह्यात्मसिद्धिः इति न्यायसिद्धाञ्जने बुद्धिपरिच्छेदे। 'शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम्। आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः' इत्याहुः। 'प्रक्रियते आरभ्यतेऽनेनेति प्रकरणम्' इति च।

2. 'बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः। नानाभूतः प्रतिक्षेत्रमात्मवित्तिषु भासते ॥' इति पञ्चिका (त. प्र)। अत्रोक्तं वित्तिभास्यत्वादि 'अनन्यसाधन' इत्येतद्विवरणादौ निराकरिष्यते। एतदात्मसिद्धिकृता देहेन्द्रियादिभेदप्रतिपादनसरणिर्नन्दीश्वरकृते प्रभाकरविजयेऽपि। विशिष्य देहेन्द्रियविषयमात्रे, न केवलं प्रमेयतः, पदवाक्यपरिस्थितितश्च बहुलमनयोस्संवादो विस्पष्टमस्ति। परन्तु नन्दीश्वरग्रन्थादत्र गाम्भीर्यं संदर्भसौष्ठवमधिकांशबोधनञ्च स्थितमपह्नोतुमशक्यम्। नन्दीश्वरश्च शालिकनाथ-भवनाथरूप नाथद्वयादर्वाचीन इति 'नाथद्वयात्तसारे' इति तच्छ्लोक एव दर्शयतीत्यलमत्राल्पके विस्तरेण। अनन्यसाधनः स्वप्रकाशः। व्यापी—ज्ञानद्वारा सर्वव्यापनशीलः; अतिसूक्ष्मतया तत्रतत्र कालभेदेनान्तःप्रवेशसमर्थ इति वा। एतत्पदद्वयार्थोऽत्रैव विस्तरे व्यक्त इति तत्त्वटीका। 3. स्थूलाद्यभिन्नाहमर्थविषयकतयाऽयम् अहम्प्रत्ययः। 4. प्रतीतिविरोधमुक्त्वा व्यवहारविरोधमाह नचेति। 5. मुख्यवृत्तिः शक्तिः; तद्भूमेः—शक्यार्थस्य। 6. शरीर-

रूपावयवाद्यवभासेनान्वयिना भवितव्यम्, येन तदन्वयाभावात् जानामीति प्रत्ययः शरीरातिरिक्तमवगमयेत्; बाह्येन्द्रियप्रत्यक्ष एव तथानियमदर्शनात्; स्वान्तस्याऽऽन्तरगुणाधारतावभास एव सामर्थ्यनियमात्। [1]अनवधृतावयवविशेषस्याप्यनेकावयवयोगिनो महिमगुणशालिनस्त्र्यणुकस्य(2) प्रथमप्रत्यक्षाभ्युपगमात्; वायोश्च त्वगिन्द्रियेण स्पर्शाधिष्ठानमात्रतयोपलम्भदर्शनाच्च। देहव्यतिरिक्तात्मगोचरत्वेऽपि यथा तदीयगुणान्तराग्रहणम्, तथेहापि; यथा (च) तत्र बाह्यप्रत्यक्षगोचर एव संख्यापरिमाणादिग्रहणनियमः॥

(देहाचेतनत्वानुमाननिरासः)

एवञ्च 'प्रत्येकं परमाणुषु चैतन्यानुपलब्धेः तदभ्युपगमे च एकशरीर एवानेकसहस्रचेतनापातात् अकारणगुणपूर्वकस्य कार्यद्रव्यवर्तिनो विशेषगुणस्यासम्भवान्न शरीरविशेषगुणश्चैतन्यम्; अयावच्छरीरभावित्वाच्च' इत्यादयोऽनुमानभेदाः प्रत्यक्षबाधितविषयतया न पराक्रमितुं क्षमन्ते। विशेषगुणत्वे च प्रतिषिध्यमाने देहगुणत्वाभ्युपगमप्रसङ्गश्च[2]। [3]अपिचेच्छानुविधायिक्रियत्वेन्द्रियवत्त्वा(श्रयत्वा ?)दयः शरीरे दृश्यमानाः संप्रतिपन्नाचैतन्याद्घटादेरत्यन्तव्यावर्तमानाः शरीरमेव चेतनमवगमयन्ति। [4]क्रमुकफलताम्बूलदलावयवादिषु प्रत्येकमविद्यमानस्यापि रागस्येव अवयविनि संयोगविशेषात्, देहारम्भकपरमाणुसंश्लेषविशेषादेव देहे चैतन्यस्याप्याविर्भावो नानुपपन्नः। [5]चर्वणजनितहुतवहसंयोगसंपादितपाटलिमभिः परमाणुभिः द्व्यणुकादिक्रमेण कारण(गुण)पूर्व एव तत्र रागोदय इति चेन्न; प्रमाणाभावात्। अपिच सितासितादितन्तुषु प्रत्येकमविद्यमानमपि चित्ररूपं विशेषगुणं

---

रूपावयव्यविषयकत्वसाधकहेतुमाभासयति। जानामीति प्रत्ययः न शरीरविषयकः तदवयवाद्यविषयकप्रत्यक्षत्वादित्यत्र सामान्यमुखव्याप्तौ बाह्यप्रत्यक्षत्वमुपाधिरिति भावः। 1. तदवयवाविषयकत्वरूपहेतोर्व्यभिचारं बाह्यएव दर्शयति **अनवधृते**ति। **महिमगुणः** महत्त्वम्। **गुणान्तरं** परिमाणादि। चैतन्यं न शरीरविशेषगुणः शरीरसमवायिकारणसमवेतगुणाजन्यत्वात् शरीरसत्ताकालाव्यापित्वाच्चेति प्रयोगद्वयम्। तत्र प्रथमहेतुसिद्धये शरीरकारणपरमाण्वाद्यसमवेतत्वं चैतन्यगुणस्योच्यते **प्रत्येक**मिति। 2. **प्रसंग** इति। विशेषनिषेधस्सामान्याभ्यनुज्ञानार्थ इति न्यायादिति भावः। 3. शरीरं न चैतन्यरूपविशेषगुणवत् तद्रहितद्रव्यारभ्यत्वात् घटवदित्येवं प्रथमानुमानस्थानापन्नानुमाने इमे व्यतिरेकिणस्सत्प्रतिपक्षहेतवोऽपि। 4. कण्ठोक्तानुमानस्यानैकान्तिकत्वं स्थलत्रये आह। 5. पीलुपाकमतेन हेतोरदुष्टत्वं शङ्कते। **अपिचे**ति वाक्यं काठिन्यानेकान्तनिगमनानन्तरं स्यात् **प्रभाकरविजये** ह्ययमंशस्ततःपश्चादेव लक्ष्यते।

---

(2) त्र्यणुकप्रत्यक्षं हि अवयवाविषयकम् अवयवे महत्त्वाभावात् तत्प्रत्यक्षायोगात्। वायोश्चेति। वैशेषिकमते तत्प्रत्यक्षेऽपि न्यायादिमते वायुस्पार्शनप्रत्यक्षमिष्टम्। नन्ववयवग्रहणाभावेऽपि त्रसरेणुस्थले संख्यापरिमाणादि गृह्यत एव। एवं बाह्यत्वपीत्यत्राह यथा चेति।

**तथेहापि** इत्यस्य पूर्वस्थितस्य '**ग्रहणनियम**' इति वाक्यसमनन्तरं पाठःस्थितस्स्यात्।

तदारब्धे पटे स्फुटमुपलभमानाः कथं कारणगुणपूर्वकत्वमुक्तगुणस्यावयवस्येम । नचा[1]वयवरूपातिरेकेणावयविनि चित्रं नाम रूपान्तरं नास्त्येव; अवयविनोऽचाक्षुषत्वप्रसङ्गात् । अवयवरूपैरेव तदुपपादने सर्वमेव कार्यद्रव्यं नीरूपमापद्येत । (ततः) अनुभवविरोधः, सर्वव्यवहारविरोधश्च । विशेषगुणश्च काठिन्यं करकाद्रव्यवर्ति अकारणगुणपूर्वकं दृश्यत इत्यनेकान्तश्च । न च संयोगविशेषः काठिन्यम्, तस्य द्विष्ठत्वात् । अस्य तु करकाद्रव्यैकवर्तित्वात्, स्पर्शविशेषतया पदा[2]र्थविद्भिरभ्युपगमाच्च ।

(कर्मकर्तृविरोधपरिहारः)

दृश्यस्य देहस्य कथं द्रष्टृत्वमिति चेत्—को विरोधः? अयमेव, यदेकस्यां क्रियायामेकस्य कर्मत्वं कर्तृत्वञ्च न घटत इति (चेत्)—यद्येवम्, व्यतिरेकवादे वा कथमात्मनि अहमिति प्रत्ययः? रूपभेदादिति चेत्—समानमिदं देहात्मवादेऽपि । अपिच परसमवायिक्रियाफलभागि कर्म, स्वसमवेतज्ञानफ[3]लभागिनश्शरीरस्य कर्मत्वमेव नास्तीति न पर्यनुयोगावकाशः ।

(सप्रमाणं चार्वाकमतोपसंहारः)

अतो देह एवात्मेति बार्हस्पत्याः । तथाच, 'पृथिव्यापस्तेजो वायुरिति तत्त्वानि । तेभ्यश्चैतन्यम् । किण्वादिभ्यो मदशक्तिवत्' इति सूत्र[4]म् ।

(देहातिरिक्तत्वसिद्धान्तः)

[5]अत्र प्रतिविधिर्देहो नात्मा प्रत्यक्षबाधतः ।
न खल्वहमिदङ्कारावेकस्यैकत्र वस्तुनि ॥ ४ ॥

[6]अहञ्जानामीति प्रत्यग्वृत्तिरहमिति मतिः इदङ्कारगोचराच्छरीरान्निष्कृष्टमेव स्वविषय-

---

1. नच नास्त्येवेत्यन्वयः । प्रथमानुमाने स्थलान्तरेणानैकान्तिकत्वमाह **विशेषगुणश्चेति** । 2. वैशेषिकैः; न्यायतत्त्वशास्त्रकृद्भिश्च । न्यायसिद्धाञ्जने द्रवत्वरूपाद्रव्यप्रस्तावे निर्विरलसंयोगप्रयुक्तस्पर्शः कठिन इति विशेष उक्तः ॥ 3. ज्ञानस्य फलं प्रकाशः व्यवहारः । आत्मानं जानामीति द्वितीया तु नैयायिकादिमत इव गौणकर्मत्वे । कर्मणि द्वितीयेत्यनुशासनं मुख्यगौणसाधारणम् । कर्मकर्तृविरोधव्यवहारस्तु मुख्यकर्मविषये इति भावः । 4. इदं सूत्रत्रयमिति क्वचित् । **किण्वम**ङ्कुरः सुराबीजम् । 5. अनया कारिकया देहात्मवादे प्रत्यक्षबाधः काणादानुरोधेन कथ्यते; उत्तरकारिकया च स एव साङ्ख्यानुरोधेन । प्रायः कारिकोपरितनानि वाक्यानि कारिकाविवरणरूपाणीति ध्येयम् । **प्रतिविधिः** प्रत्युत्तरम् । **अहमिदङ्कारौ** अहमिति इदमिति च प्रतीती । स्वस्य परात्मनि अयमिति धीसत्त्वा**देकस्यैकत्रे**त्युक्तम् । 6. **अहं जाना**मीतिस्थाने अहमिदं जानामीति स्यात्? । **न्यायसिद्धाञ्जने,** गीताद्वितीयाध्याय **चन्द्रिकायाञ्च** देहात्मवादनिरासविस्तरः ।

मुपस्थापयति घटादेरिव ; पराग्वृत्तिरिदमिति शरीरविषयिणी च शेमुषी स्वविषयमहङ्कार-गोचराद् विवेचयति, यथा अयं घट इति । इतरथा स्वपरविभागानुपपत्तेः । न चैकस्मिन्नेव रूपभेदादेवं प्रतीतिः । न हि देवदत्तो दण्डिनमात्मानं दण्डयमिति प्रत्येति ।

(अहमितिप्रत्यक्षस्यावयवाविषयकत्वात् देहाविषयकत्वोपपादनम्)

अन्यच्च—नियमितबहिरिन्द्रियवृत्तेरवहितमनसः अहमिति स्वात्मानमवयतः[1] कर-चरणोदराद्यवयवा न भासन्ते । स्वीयसि चावयविनि शरीरे अहमितिमतिगोचरेऽभ्युपगम्य-माने अवश्यमवयवप्रतिभासेनाप्यन्वयिना भाव्यम् । न ह्यस्ति संभवः, 'अवयवी स्वीयान् प्रच-कास्ति, 'अवयवास्तु न केचन प्रथन्ते' इति । यत्तु त्र्यणुके व्यभिचार इति—तन्न—वातायनविवरदृश्यनिर्भागत्रसरेणु[2]व्यतिरेकेण परमाणुस्वीकारे कारणाभावात्, [3]प्रत्यक्ष-योग्यावयवस्य तथाप्रतिभासनियमाद्वा न व्यभिचारः । न चावयविनि बहिरिन्द्रियग्राह्य एवायं नियम इत्युत्प्रेक्ष्यम्, प्रमाणाभावात् ; अन्तःकरणस्य च केवलस्यावयविनि वृत्त्यसंभ[4]वाच्च । वायोस्तु रूपाद्यभावात् केवलस्पर्शाधारतयोपलम्भः । तत्रापि तादृशाने-कावयवप्रतिभासोऽस्त्येव स्पृश्यमान इव घटादाविति न तेन व्यभिचारः ।

(स्थूलोऽहमित्यत्राप्यतिरिक्तभानम्)

यत्तु स्थूलोऽहं, कृशोऽहमिति शरीरेऽहंप्रत्ययो दृश्यत इति-तदपि पर्यालोचनीयम् । तत्राप्यन्तःशरीरमहमाकारमेव[5] किमपि वस्तु अहङ्कारो गोचरयति ; न पुनश्चाक्षुष इव देह-प्रत्ययः स्थौल्यबाल्यादियोगिदेहमात्रम् । अत एव ममेदं गृहमितिवत् ममेदं शरीरमिति भेदप्रतिभासो व्यवहारश्च । न ह्यसौ साक्षात्प्रतीतभेदनिमित्तः प्रतायमानः [6]शिलापुत्रकशरीर-व्यपदेशवदौपचारिको युक्त आश्रयितुं ममात्मेतिवत् । तत्रात्मशब्दस्यात्मनि वृत्तेरैकार्थ्याद्-

---

निष्कृष्टम्-अतिरिक्तम् । 'अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः' इति सूत्रम् (वै. ३. २-१४) । अहंबुध्या परागर्थात् प्रत्यगर्थो हि भिद्यते । अतः पराक्त्वाविशेषात् घटादित इव देहादपि भेदो गृह्यते ; एवं इदम्बुद्ध्या प्रत्यगर्थात्परागर्थश्च भिद्यत इति अयं देह इति धिया देहेऽहमर्थ-भेदग्रह इत्याह परागिति । 1. अवतयः—जानतः पुरुषस्य ।

2. अतोऽवयवाभावादेव त्रसरेणुप्रत्यक्षे तदप्रतीतिः । अतस्तत्र त्र्यणुकव्यवहारोऽप्ययुक्त इति भावः । 3. अभ्युपगम्यवादेनाह प्रत्यक्षेति । 4. यत् अवयविप्रत्यक्षं तत् बहिरिन्द्रियजन्यमिति व्याप्तेरिति भावः। सिद्धान्तेऽवयवातिरिक्तावयव्यनङ्गीकारात् सुतरामवयविप्रतिभासानुपपत्तिरिति ध्येयम् । 5. तथा च स्थौल्यादियोगिदेहावच्छिन्नात्मा प्रत्यक्षविषय इति भावः । स्थूलोऽहमिति वाक्ये तु स्थूलाभेदोपपत्तयेऽहंशब्दो लाक्षाणिक इति वक्ष्यति । देहाभेदस्वीकारापेक्षया लक्षणाकल्पनं ज्याय इति तदाशयः । वेदान्तव्युत्पत्तौ तु स्थूलशब्दस्य स्थूलावच्छिन्नात्मपरत्वान्न लक्षणाऽपि ।

6. प्रतायमान इत्यत्र प्रतीयमान इति पा. तथैव च नीतिमाला ।

विवा[1]दाच्च युक्तं तथाश्रयणम् । न चैवमत्र । अतो देहव्यतिरेकिणश्चेतनस्य प्रत्यक्षसिद्धत्वात् तत्सम्बन्धिनि लाक्षणिको देहेऽहंशब्दप्रयोगः ।

(अभेदभ्रमनिर्वाहः)

बाह्यविषयेषु परस्परविरुद्धरूपपरिमाणसंख्यासंनिवेशग्रहणेन व्यतिरेकस्य स्फुटत्वात् [2]आत्मनि तादृशरूपान्तराग्रहणेन देहाभेदप्रतिभासभ्रमोऽविवेकिनाम् । इतश्च—इच्छानुविधायिस्वव्यापारोऽयमात्मा । इच्छयैव हि सङ्कल्पयति [3]स्मरत्यभ्यूहति च । शरीरमपि तदिच्छानुविधायिशयनासनोत्थानादिचेष्टमिति भवत्यभेदभ्रमः, शुक्तिरजतादाविव ।

(योगजप्रत्यक्षेण भेदग्रहः)

[4]प्रणिहितमनसस्तु ज्ञातृतया सिद्ध्यन्तमहमाकारमर्थमनवयवम्, इदमिति परिस्फुरतः स्थूलादवयविनः शरीरात्पृथगपरोक्षयन्त्येव ।

(उक्तार्थे प्रयोगनिष्कर्षः)

[5]भवन्ति च (प्रयोगाः ?)—जानामीति प्रत्ययः शरीरविषयो न भवति, अर्थान्तरविषयो वाऽयम्, [6]अप्रकाशमानतदवयवप्रतिभासत्वात्, य एवंप्रकारः स तथा, यथा अयमिति प्रतिभासः[7]; यत् शरीरविषयम्, न तत् तथा, यथा उभयसंमतं शरीरज्ञानम् । तथा—शरीरमहम्प्रत्ययगोचरो न भवति, इदमिति गृह्यमाणत्वात्, बाह्येन्द्रियग्राह्यत्वाद्वा घटादिवदिति ।

(साङ्ख्यरीत्या देहात्मवादे प्रत्यक्षबाधः)

किञ्च— अपरार्थं स्वमात्मानमात्मार्थेऽन्यच्च जानतः ।
सङ्घातत्वात्परार्थेऽस्मिन् देहे कथमिवाऽऽत्मधीः ॥ ५ ॥

सर्वस्य बाह्याभ्यन्तरभोग्यवर्गस्य शब्दसुखादेरात्मार्थतां, भोक्तुश्चात्मनोऽनन्यार्थतां सर्वस्य शेषितां प्रत्यक्षतः प्रतिपद्यामहे । न च शरीरमनन्यार्थं संघातत्वात् । संघाता हि सर्वे परार्था दृष्टाः शयनासनरथादयः । न च संघातास्संहतशरीराद्यर्था दृश्यन्त इत्यात्मनोऽपि संहतत्वमापद्यत इति वाच्यम्, तथासति तस्यापि परार्थत्वप्रसङ्गात् । अपरार्थश्चायमात्मा

---

1. अविवादात् देहात्मवादिनापि तत्र तथैव निर्वाह्यत्वात् । स्फुटत्वादिति । भेदप्रतिभासाभावेपीति शेषः । 2. घटादौ मिथोभेदकत्वेन बहिस्सिद्धो य आकारस्तत्तुल्याकाराग्रहणात् समानाकारग्रहणाच्च भ्रम इति । 3. स्मरत्यप्यूहतीति पाठान्तरमयुक्तमिव । उपसर्गादस्यत्यूहत्योर्वेति वार्तिकम् । 4. लौकिकप्रत्यक्षमुक्त्वा योगजप्रत्यक्षं दर्शयति । 5. एवमुपवर्णितं प्रत्यक्षस्यातिरिक्तग्राहित्वं प्रयोगाभिनयेन निष्कर्षति भवन्ति चेति । भवन्तिचेत्येतावन्मात्रोक्तावपि प्रयोगा इत्यर्थसिद्धम् । ईदृशसूक्तिशैल्या ईश्वरसिद्धौ बहुलमुपलम्भात् । 6. प्रकाशमानशरीरावयवकप्रतिभासभिन्नप्रतिभासत्वात् । 7. घटादाविति शेषः। न हि घटाविज्ञानं शरीरावयवविषयकम्; तद्वदिति भावः । 'यथा घटोऽयमिति प्रतिभास' इति प्र. । 'यथाऽयं घट इति प्रतिभास' इति आत्मसिद्धावेव पा० क्वचित् (डि. १५२८४)

प्रत्यक्षतः प्रकाशत इत्युक्तम् । योग्यानुपलम्भबाधितं चात्मनि संघातत्वम् । संघातान्तरार्थत्वे च, तस्यापि तथा, ततोऽन्यस्यापि तथेति न व्यवतिष्ठेत । न च व्यवस्थायां सत्यामव्यवस्था युक्ता । न च संघातस्य परार्थत्वे परस्य संहतत्वमपि प्रयोजकम् ; भोक्तृतयैवात्मनस्तदर्थ-संघातं प्रति पर[1]त्वोपपत्तेः । व्याप्त्यनुपयोगिनोपि दृष्टान्तदृष्टधर्ममात्रस्यानुरोधेनानु-मानमिच्छतः सर्वानुमानोच्छेदप्रसङ्गः ।

(चार्वाकदूषितानुमानोद्धारः)

अस्फुटत्वेपि भेदस्य शरीरे तदसंभवात् ।
तद्गुणान्तरवैधर्म्यादपि[2] ज्ञानं न तद्गुणः ॥ ६ ॥

[3]सर्व एव कार्यद्रव्यगतविशेषगुणः कारणगुणपूर्वक इति कथमतत्पूर्वकः शरीरे चैतन्य-गुणस्संभवेत् ।

(शक्तिदृष्टान्तभङ्गः)

यत्तु बार्हस्पत्यं वचनम्, 'पृथिव्यापस्तेजो वायुरिति तत्त्वानि तेभ्यश्चैतन्यं किण्वादि-भ्यो मदशक्तिवत्' इति—तदनुपपन्नम् । शक्तेरविशेषगुणत्वेन तथोपपत्तेः । सर्वद्रव्येषु [4]तत्कार्यसमधिगम्यस्तत्प्रतियोगी शक्त्याख्यो गुणः साधारणः ; नैवं चैतन्यम्, देहैकगुण-त्वाभ्युपगमात् ; [5]कार्यत्वे सति एकविधप्रत्यक्षसिद्धतया च विशेषगुणत्वात् । द्रव्यान्तर-संयोगसमासादितमदशक्तिभिरकार्यभूतैः परमाणुभिर्निजगुणपुरस्कारेण स्वकार्यद्रव्येषु मद-शक्त्युत्पादोऽपि नानुपपन्नः ।

(रागदृष्टान्तभङ्गः)

ताम्बूलरागस्तु पूर्वद्रव्यावयवविभागानन्तरं द्रव्यान्तरसंयोगजनितरक्तिमगुणैः कारणैः क्रियते । दृश्यते हि तत्रावयवेष्वपि प्रत्येकं रक्तिमगुणः । न च शरीरावयवेषु प्रत्येकं चैतन्यगुणः प्रज्ञायते प्रतिज्ञायते वा । तदुपगमे च एकशरीर एवानेकचेतनापा-तादङ्गाङ्गित्वाभावः [6]प्रतिसन्धानव्यवहारलोपश्च,[7] देवदत्तदृष्ट इव यज्ञदत्तादेः ।

---

1. उद्देश्यत्वोपपत्तेः । सङ्घातं प्रत्युद्देश्यत्वे भोक्तृत्वशक्तिरेव प्रयोजिका ; न सङ्घातत्व-मिति । 2. अयावद्द्रव्यभावित्वादिरूपात् । 3. कारिकायां तदसंभवादिति संगृहीतं विवृणोति सर्व इति । 4. तेषां द्रव्याणां यत्कार्यं तत्समधिगम्यः । अयं न्यायसिद्धाञ्जनदृष्टः पाठः । (४२५. पु.) पा० तत्तत्कार्येति । तत्प्रतियोगी कार्यविषयकः । 5. चैतन्यं विशेषगुणः कार्यत्वे सत्येकेन्द्रिय-गुणत्वादिति । रूपत्वज्ञानत्वादौ व्यभिचारवारणाय सत्यन्तम् । अत्र गुणपदमद्रव्यार्थकम् । अतश्च कार्यत्वे सतीति मूलोक्तसार्थक्यम् । द्वीन्द्रियग्राह्यसंयोगादिवारणाय एकेति । त्वक्चक्षुर्मात्रग्राह्ययोर्वायु-प्रभयोर्वारणाय गुणत्वम् । मास्तु वा तत् सामान्यगुणभिन्नत्वस्य साध्यत्वे । 6. उपकार्योपकार-कभावाभावः । 7. प्रतिसन्धानस्य व्यवहारस्य च लोपः ।

(चित्ररूपदृष्टान्तभङ्गः)

यत्तु—अकारणगुणपूर्वकं चित्ररूपं पटे इति—तन्न । [1]नानारूपता हि चित्रता । सा च नानारूपैस्तन्तुभिः क्रियत इति किमनुपपन्नमिति । प्रत्येकमविद्यमानमपि तच्चित्ररूपं तन्तुषु संहतेषु दृश्यत एव, चित्रा इमे तन्तव इति । संभूय च तेषां पटारम्भकत्वम् । एवं तत्कारणेष्वपि तदिति न क्वचिद्व्यभिचारः । न चैकरूपनियमाभावेनावयविनोऽचाक्षुषत्वम्, महत्त्वैकार्थसमवायिना रूपवत्त्वेनैव चाक्षुषत्वसिद्धेः । अस्तु वा चित्रं नाम एको रूपविशेषः । स तु रूपैरेव कारणगतैर्नानाविधैरारभ्यत इति दृष्टम् । न चैवमवयववर्तिभिरेव [2]चैतन्यैरवयविनि शरीरे चैतन्यविशेषारम्भः, चितितन्मात्रस्यैव तेष्वसंभवात्[3] । अतो न देहगुणश्चैतन्यम् । एतेन सुखादयोऽपि शरीरगुणाः प्रत्युक्ताः ।

(तद्गुणान्तरवैधर्म्यरूपहेतूपपादनम्)

अपिच[4] दृढ एव शरीरे विरोधिगुणापातमन्तरेण कुसुम—विलेप[5]नगन्ध इव निवर्तमानः चैतन्यसुखादिर्न तद्गुणो भवितुमर्हति, न खलु तद्विशेषगुणा रूपादयस्तथा निवर्तन्ते । [6]आत्मनः परेषाञ्च शरीरगुणाः प्रत्यक्षयोग्याः, बाह्येन्द्रियग्राह्याश्च ; न च तथा ज्ञानादिरिति नासौ तद्गुणः ।

(अनेकहेत्वन्तरोपन्यासः)

किञ्च— उत्पत्तिमत्त्वात् पारार्थ्यात् सन्निवेशविशेषतः ।
रूपादिमत्त्वात् भूतत्वात् देहो नात्मा घटादिवत् ॥ ७ ॥
सच्छिद्रत्वाददेहित्वात् देहत्वान्मृतदेहवत् ।
इत्यादिसाधनैर्न्यायैः[7]निषेध्या वर्ष्मणश्चितिः ॥ ८ ॥

(देहात्मभावसाधकोक्तव्यतिरेकिदूषणम्)

एवं [8]प्रत्यक्षविरोधात्, अन्वयमुखेन साध्यमुपस्थापयद्भिरुदीरितसाधनैरपहृ[9]तविषय-

---

1. अनेकविजातीयरूपत्वं चित्रशब्दप्रवृत्तिनिमित्तम् ; न रूपसमुदायत्वम् । नीलादिरूपाण्येव चित्ररूपम् । तत् अवयविनीवावयवेष्वप्यस्तीति भावः ।

2. अनुद्भूतचैतन्यैरित्यर्थः । 3. अनुद्भूतानामुद्भूताजनकत्वाच्च । 3. तद्गुणान्तरवैधर्म्यादित्युक्तमुपपादयति । स्वविरोधिगुणाभावविशिष्टस्वाश्रयसत्ताकालाव्यापित्वं हेतुः । काठिन्यादौ व्यभिचार इति विशिष्टान्तम् । 5. विलेपनं मृगमदादि । 6. चैतन्यं न शरीरगुणः पराग्राह्यत्वात् बहिरिन्द्रियाग्राह्यत्वाच्चेति वैधर्म्यान्तरद्वयमाह । 7 प्रतिज्ञादिसमुदायो न्यायः, तदनपेतैः । 8. अनिदमर्थभूतानन्यार्थात्मविषयकप्रत्यक्षविरोधात् ; नेशत इत्यत्रान्वयः । 9. विषयः साध्यं तदपहारो नाम बाधः । अन्वय्यपेक्षया व्यतिरेकिणो दुर्बलाः, व्यतिरेकव्याप्तेरन्वयव्याप्तिसंपादनमुखेन कार्यकरत्वस्वीकारात् । समबलत्वेपि प्रत्यक्षोपष्टब्धत्वात् प्रकृते प्राबल्यम् ।

तयेन्द्रियाश्रयस्त्रादिव्यतिरेकिहेतवो न साध्यमुपस्थापयितुमीशते ॥

(इन्द्रियात्मत्वशङ्का)

सन्तु तर्हीन्द्रियाण्येवाऽऽत्मा। न च तानीदन्तया प्रथन्ते, येन देहवत् अहङ्कारगोचरात् बहिष्क्रियेरन्। नापि तथोद्भूतरूपादिगुणानि, स्थूलानि; येन तत्प्रतिभास इवेन्द्रियगोचरत्वे अहम्प्रत्ययस्य रूपावयवादिप्रतीतिः प्रसज्येत। तद्व्यापारफलश्च ज्ञानं तद्गामि युक्तम्, [1]स्नानाध्ययनादिफलवत्। अत एव सत्यतपाः, 'द्रष्टुश्चक्षुषः' इति।

(तत्खण्डनम्)

तन्न—विकल्पासहत्वात्। तथाहि—किं प्रत्येकमिन्द्रियाणि चेतनानि, संभूय वा? यदि प्रत्येकम्, इन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसन्धानं न स्यात्। अस्ति च तत्—यमहमद्राक्षं, तमहं स्पृशामीति। अत एव न संभूयापि चेतनत्वम्। न हि पञ्चभिरिन्द्रियैस्संभूयैकं वस्त्वनुभूयते, अनुसन्धीयते वा। एकेन्द्रियविगमे च प्रा[2]यणप्रसङ्गश्च। इन्द्रियचैतन्ये च तत्तदिन्द्रियापाये तत्तदिन्द्रियार्थस्मरणमपि न भवेत्। न च तद्व्या[3]पारफलतया तत्समवायित्वं ज्ञानस्य, शस्त्रादिव्यापारजन्मनोऽपि पापादेः परसमवायित्वात्। अन्य[4]था च प्रष्टुः मृत्युप(मृत्याः?)पत्ति शरणागतपरित्यागस्य नृशंसताश्चालोच्य सत्यतपसस्तथावचनम् ॥

---

1. उक्तं हि, 'ज्योतिष्टोमे तीर्थे स्नातीति विहितस्नानफलं स्नातृगतमालिन्यापनयादि; न तु क्रतुगतोपकारः (मी. ६-४-९); अध्ययनफलञ्चाध्येतृगतार्थज्ञानाक्षरग्रहणादि; न त्वाचार्यस्याचार्यकसिद्ध्यादि (मी०. १ १-१) इति। 2. प्रायणं मरणम्। 3. ज्ञानमिन्द्रियनिष्ठं तद्व्यापारजन्यत्वादिति शस्त्रावृत्तिनि आत्मनिष्ठे पापेऽनेकान्तिकम्। 4. अन्यथा-अकथने। कुत्र वराह इति प्रष्टुः तदकथने क्षुधा मृत्यापत्तिः; कथने चाश्रमागतवराहत्यागाच्छरणागतत्याग इत्यालेच्य किमपि सत्यतपसोक्तम्। अतो न तत् तत्त्वसाधकमिति। इमौ व्याधवराहौ ऋषिगुणपरीक्षार्थमागताविन्द्राविष्णू। प्रभाकरविजये, "अत एव वचनं सत्यतपसः, द्रष्टुश्चक्षुषो नास्ति जिह्वेति" इति, "यत्तु सात्यतपसं वचनम्, तत् शरणागतपरित्राणस्यावश्यकर्तव्यतामन्यथा च व्याधस्य प्राणयात्रापत्तिश्चाऽऽलोच्योक्तमिति न दोषः" इति च। श्रीवराहपुराणे (९८ अ.) 'यदि तं दर्शयाम्यस्मै वराहं हन्यते तदा। नो चेत् कुटुम्बः क्षुधया सीदत्यस्य न संशयः', 'दृष्टश्चक्षुर्निहितं जङ्गमेषु जिह्वा वक्तुं मृगयौ तद्विसृष्टम्। द्रष्टुश्चक्षुर्नास्ति जिह्वेह वक्तुं जिह्वायास्यात्तत्त्वतोऽस्तीह चक्षुः' इति। अत्रैवं शुद्धपाठः स्यात्, 'द्रष्टुश्चक्षुर्निहितं जङ्गमेषु जिह्वा वक्तुं मृगयो। तद्विसृष्टम्। द्रष्टुश्चक्षुषो नास्ति जिह्वेह वक्तुं जिह्वाया वा....इत्येवम्। द्रष्टृत्वं चक्षुषः; वक्तृत्वं जिह्वायाः न चैकाधीनमन्यदिति तदर्थः। स्वानुपयुक्तमिदमिति व्याध उपेक्ष्य गच्छतु इति धिया कालहरणार्थं कृतोऽयं वादः स्वस्यासत्यवचस्त्वपरिहाराय।

(मनआत्मवादोपक्षेपः)

अस्तु तर्हि मन एव चेतनम्। तथासति हि पूर्वोक्ता दोषाः परिहृता भवन्ति। तद्धि सर्वेन्द्रियाध्यक्षं प्रज्ञायते प्रतिज्ञायते च। उपपद्यते चेन्द्रियान्तरेण प्रतिसन्धानम्, दर्शनानुसन्धानाधारस्य मनस एकत्वात्। तत्तदिन्द्रियापायेऽपि स्मरणमप्युपपद्यत एव, मनसो नित्यत्वात्।

(तत्खण्डनम्)

तदपि न—करणत्वात् चक्षुरादिवत्। बाह्यान्तरसकलविषयसंवेदनकरणतया हि मनः प्रकल्प्यते। [1]बाह्येन्द्रियेषु यथायथं निजविषयसन्निकर्षभागिष्वपि यतो न युगपदेव सर्वे विषयाः प्रतीयन्ते, अतोऽवगच्छामः, 'अस्ति किञ्चिदपरमपि साधनम्, यत्साहायकविरहान्न सर्वे प्रकाशन्ते; कश्चिदेवैकः प्रतीयते' इति। तथा सुखादिसंवेदनान्यपि करणवन्ति क्रियात्वात्, संवेदनत्वाद्वा रूपादिज्ञानवदिति। तदेवं ज्ञानकरणतयाऽवगतस्य मनसः कथमिव ज्ञाने कर्तृत्वम्। स्वातन्त्र्यलक्षणं हि तत्। तच्च[2] स्वच्छन्दानुरोधेन साध्यसिद्ध्यनुगुणोपकरणसंपादनसामर्थ्यम्, स्वसमवेतमेव वा गुणान्तरं तन्त्रीकृत्य प्रवृत्तिः। करणत्वं तु पराधिष्ठानाधीनव्यापारतारूपपारतन्त्र्यनियतं साधकतमत्वमिति कथमिवैकत्र मनसि परस्परविरुद्धतदुभयधर्मसम्बन्धं प्रतिपद्येमहि। अथ तदपि मनः करणान्तरेण स्मरणादिषु कर्तृभावमनुभवति, तथासति संज्ञामात्रे विवादः। य एव हि चक्षुरादिभिः रूपादीन्, अन्तःकरणेन च सुखादींश्चेतयते, स एवात्मा। तस्मिन्नेव चेन्मनस्संज्ञा निवेश्यते, कामं निवेश्यताम्। न नः किञ्चित् हीनम्। किन्तु तदा सर्वलौकिकव्यवहारो बाध्येतेत्यलमनेन।

(उक्तमनस्सिद्धिप्रकाराक्षेपः)

[3]आह—किमिदं मनो नाम॥ ननूक्तमान्तरं ज्ञानकारणं द्रव्यमिति॥ किं पुनरस्य साधनम्?॥ ननूक्तं "युगपद्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति॥ उक्तं नाम। तथापि कथं तत्त्वान्तरसिद्धिः। कल्पयित्वाऽपि हि तत् युगपत्स्मरणानुत्पत्त्युपपत्तयेऽवश्याश्रयणीयमेव निमित्तान्तरम्। सन्ति हि [4]युगपदस्य सर्तुर्नानार्थानुभवभाविताः संस्काराः; अथ च न सर्वे स्मर्यन्ते; किञ्चिदेव कदाचित् स्मर्यते॥ संस्कारोन्मेषहेतुसन्निपातक्रमात् तथात्वमिति चेत्, एवमपि प्रणिधानमात्रोद्बोधनीयसंस्कारस्य स्मृतियौगपद्यमापद्येत। यावदनुभूतसकलविषय-

---

1. बाह्यान्तरेत्यत्र बाह्यमादावुपपाद्यते। इन्द्रियं ज्ञानजनने मनस्संयोगरूपकारणमपेक्षमित्यर्थः। तदुक्तम्-युगपद्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् (न्या० १-१-१६) इति। तथेत्यादिना आन्तरेत्येतदुपपाद्यते। 2. स्वतन्त्रः कर्तेत्युक्तं स्वातन्त्र्यं शक्तिविशेषः, स्वेच्छाधीनप्रवृत्तिर्वा। अचेतनगतप्रवृत्तिवारणाय तन्त्रीकृत्येत्यन्तम्। 3. उक्तं मनस्साधनप्रकारमाक्षिपति आहेत्यादिना, 'उच्यते-यदि बुद्धिरेव मन (२४-पु.)' इत्यतः प्राक्तनेन ग्रन्थेन। 4. युगपदिति सन्तीत्यत्रान्वेति; स्मर्यन्त इत्यत्रानुषज्यते।

सुस्मूर्षया [1]सर्वतः प्रत्याहृतचेतसस्साधारण्येन प्रणिदधतोऽपि न सर्व एवार्थाः स्मृतिमधिरोहन्ति । यदि तु शुभाशुभरूपतया स्मरणानामदृष्टवशात् व्यवस्था, क्रम[2]ज्ञानस्वाभाव्याद्वा (व्यवस्थाक्रमः ज्ञानस्वाभाव्याद्वा) आत्मनः, तथासति बहिरिन्द्रियेषु च यथायथं स्वविषय संप्रयुक्तेषु तथैव युगपद्ज्ञानानुत्पत्तिरुपपद्यत इति कृतमिन्द्रियान्तरेण ।

(सुखाद्यसमवायिसंयोगाश्रयतया मनस्सिद्ध्याक्षेपः)

स्यान्मतम्--कादाचित्कस्य सुखादेरात्मसमवायिनो बाह्यविषयादृष्टादिनिमित्तकारणस्यासमवायिकारणेन भाव्यम् । तच्चात्ममनस्सन्निकर्ष इति मनोद्रव्यसिद्धिरिति—तदसत्—सुखदुःखादिपूर्वकालजन्मनोऽभिमतानभिमतविषयसंपर्कजज्ञानस्याऽऽत्मसमवायिन एवासमवायिकारणत्वात् । [3]तस्य च विषयसंप्रयुक्तेन्द्रियसंप्रयोग एवात्मसमवेतोऽसमवायिकारणम् । तद्धेतुरपीन्द्रियव्यापारः प्रयत्नमदृष्टश्चात्मसमवेतमपेक्षमाणादात्मेन्द्रियसन्निकर्षादसमवायिकारणात् । प्रयत्नस्य तु स्वपूर्वक्षणवर्ति कर्तव्यताज्ञानम् । प्रयत्न एव त्वदृष्टस्यापीति नात्मविशेषगुणानां बुद्धिसुखदुःखेच्छादीनामसमवायिकारणसापेक्षतयापि द्रव्यान्तरपरिकल्पनं न्याय्यम् ।

(आत्मगुणस्य संयोगैकासमवायिकारणकत्वसाधकभङ्गः)

यत्तु—नित्यद्रव्यविशेषगुणस्य द्रव्यान्तरसंयोग एवासवायिकारणम्, पार्थिवपरमाणुषु अग्निसंयोगादसमवायिकारणात् रूपोत्पत्तेरिति-तदपि स्थवीयः । पार्थिवपरमाणुषु रूपादयो दहनसंयोगादिति कुतोऽवगतम्? कार्यद्रव्ये तथा दर्शनादिति चेत्—इह वा तर्हि किं न दृश्यते, [4]इष्टानिष्टप्राप्त्यवगमानन्तरं सुखादिर्जायत इति । दृष्टकारणव्यभिचारे हि कारणान्तरानुमानावगमः । न चेहास्ति व्यभिचारः । अतः प्रसिद्धकारणभावेष्वेव यत्र

---

1. **सुस्मूर्षया**-स्मर्तुमिच्छया । 2. एकदा एकज्ञानजनकत्वमात्मनस्स्वभावः । समबलनानाज्ञानसामग्रीकाले ज्ञानविशेषप्राथम्येऽदृष्टं नियामकम् । 3. **तस्यचे**त्यादि । अत्रायं (प्रकरणपञ्चिका. तत्त्वा) ग्रन्थोऽनुसंधेयः-"तच्चात्ममनस्संनिकर्षाख्यम् । तस्य चासमवायिकारणं मानस एव परिस्पन्दः । तस्याप्यात्ममनस्संनिकर्षान्तरमात्मसमवेतं प्रयत्नदृष्टञ्चापेक्षमाणमसमायिकारणम् । प्रयत्नादृष्टयोश्चात्मनस्सन्निकर्षान्तरमेवेत्यनादिरेषा कार्यकारणपरम्परा" इति । आत्मसिद्धिग्रन्थे चात्र मनःस्थाने इन्द्रियमेवोक्तम् । विभुतयाऽऽत्मेन्द्रियसन्निकर्षस्य सूपपादत्वात् तद्धेतुरित्यनेन विशेषणसंप्रयोगहेतुत्वं विवक्षितं स्यात् । यद्वा विशेष्यभूतेन्द्रियसंप्रयोगपरत्वमेवाऽस्तु ; तस्यापि क्रियामन्तरेणायोगात् इन्द्रियक्रियाजन्यतया पञ्चिकाग्रन्थ इवार्थवर्णनसंभवात् ।

4. रूपादि प्रति रूपाद्येवासमवायिकारणमिति नियमः क्वचिदग्निसंयोगान्वयव्यतिरेकबलात् यथा भज्यते, तथा नित्यगतगुणस्य संयोगासमवायिकारणकत्वमपि आत्मनि पूर्वपूर्वगुणान्वयव्यतिरेकबलात् भज्यताम् ; किमप्रसिद्धसंयोगतदाश्रयकल्पनेन असमवायिलक्षणे ज्ञानादिभिन्नत्वनिवेशेन चेति भावः ।

कार्यसमवायः, तत् समवायिकारणम् । यत्तु तत्प्रत्यासन्नम्, तत् असमवायि ; यत् अन्यत्, तत् निमित्तमिति व्यवस्थाश्रयणमुचितम् ; न त्वनपेक्षिताप्रसिद्धद्रव्यान्तरसंयोगाभ्युपगमेन तस्यासमवायिकारणत्वाश्रयणम् ; कारणान्तरानुपलब्धेः । दृष्टानुसाराच्चाणुगतरूपादौ तथाभ्युपगमः । इह तु तद्विपर्ययः प्रदर्शित एव ।

(संयोगासमवायिकारणकत्वेऽप्यभीष्टमनोऽसिद्धिः)

एव[1]मपि व्याप्तिबलेन यो (यदि) द्रव्यान्तरसंयोगोऽनुमातव्यः, स तर्हि स्पर्शवद्द्रव्यसमवेतो भौतिक[2] एव चोपलब्ध इति प्रसिद्धदेहादिसंयोग एवानुमानपर्यवसानान्न नवमद्रव्यसिद्धिः । अथोच्येत—भौतिकत्वे हि मनसः पृथिव्याद्यन्यतमत्वेन भवितव्यम् । तच्चानुमानान्तरैर्व्यतिरेकमापादयद्भिः प्रत्यासिद्धम् । तथा[3]हि—न पार्थिवं मनः, रसावगमनिमित्तेन्द्रियत्वात् रसनावत्; न पाथसीयम्, गन्धग्रहणनिमित्तेन्द्रियत्वात् घ्राणवत् । एवमतैजसत्वाद्यपि तत्तदिन्द्रियागोचरग्रहणनिमित्ततया शक्याध्यवसानमित्यभौतिकत्वं मनस इति-तत् अनुपपन्नम्, धर्मिविशे[4]षविपरीतसाधनात्। रसावगमनिमित्तेन्द्रियत्वमपार्थिवत्वमिव पाथसीयत्वमपि समर्थयते(ति) । एवं साधनान्तराण्यपि भूतान्तरव्यतिरेकमिवाऽऽत्मीयभूतभावमापादयन्ति । अथ शब्दस्पर्शरूपरसगन्धेषु यद्गुण[5]ग्राहि यदिन्द्रियम्, तदेव तद्गुणकभूतारब्धम्—हन्त तर्हि तदेव तदितरभूतव्यतिरेकितयाऽध्यवगतमिति [7]न तदवगमकतामात्रेणाभिमतव्यतिरेकसिद्धिः । अपि च शब्दादिगुणावगमसाधारणसाधन[7]तया शरीरमिव पाञ्चभौतिकम्, एकद्वित्रादिमयं वेतरभूतसंसृष्टमस्तु मनः । तथाऽऽम्नायते, 'अन्नमयं[8] हि सोम्य मनः' (छा. ६. ४) इति ।

ननु तन्न तत्प्रकृतित्वप्रतिपादनपरम्, अपितु तदधीनप्रवृत्तितामात्रप्रदर्शनार्थम्, 'आपोमयः प्राणः' इत्यादिवत् । अत एवापवर्गदशायामपि मनोऽनुवृत्तिः । दर्शितं हि तत्रैवाष्टमे,

---

1. संयोगासमवायिकारणकत्वाऽऽग्रहेपि मनसो भौतिकत्वापत्त्येष्टासिद्धिरित्याह **एवमपीति** । 2. **भौतिके** भूतपरिणामे । अनेन स्पर्शवद्द्रव्यस्य तस्यानित्यत्वमप्युक्तम् । 3. ज्ञानासमवायिकारणसंयोगाश्रयवस्तु न भौतिकं पार्थिवादिव्यतिरिक्तत्वादित्यनुमानम् । तत्र प्रत्येकव्यतिरेकं साधयति **तथाहीति** ।

4. **धर्मिणि** पक्षे अभिमतो यो विशेषः अभौतिकत्वम्, तद्विपरीतपाथसीयत्वादिसाधनात् हेतुर्विशेषविरुद्ध इति । 5. **यद्गुणग्राहि**-यद्गुणमात्रग्राहि । 6. गन्धमात्रग्राहिता पृथिवीमात्रारब्धत्वे प्रयोजिका, घ्राणे पृथिवीतरानारब्धत्वविशिष्टपृथिव्यारब्धत्ववर्णनात् । अतो मनसि गन्धमात्रग्राहित्वाभावात् तन्मात्रारब्धत्वाभावसिद्धावपि न तदारब्धत्वासिद्धिरिति भावः । 7. **साधनतयेति** । इयं शरीरदृष्टान्तेन भौतिकत्वसाधकहेतुः । भौतिकत्वं सकलभूतोपादानकत्वं वा किञ्चिद्भूतोपादानकत्वविशिष्टान्यभूताप्यायितत्वं वा । 8. उपनिषद्वाक्यमिदं उपरि उदाहरिष्यते । तत्र यथासिद्धान्तं धर्मभूतज्ञानपरत्वे मनःपदं स्वरसम् । वक्ष्यति च मनश्शब्दस्येह बुद्ध्यनतिरेकं स्वयमेव ।

'मनसैतान् कामान् पश्यन् रमते', 'मनोऽस्य दैवं चक्षुः' इति । तथा परस्याश्च देवतायाः, "सोऽन्यं कामं मनसा ध्यायीत" इति महोपनिषदि । 'मनसैव जगत्सृष्टिम्' इति च पुराणे ।

(मनसो बुद्ध्यन्तर्भावः)

उच्यते, सत्यमेवम् । द्रव्यान्तरपरिकल्पनातो वरमेवं वाऽऽश्रयणमित्युक्तम् । परमार्थतस्तु न भौतिकम्; नापि [1]नवमं द्रव्यम् । क तर्हीदानीं मनश्शब्दः; बुद्धावेव । अत एव हि बुद्धिमान् मनस्वीति व्यपदिश्यते । मनसोऽवस्थाभेदाश्च द्रागेवापरोक्ष्यन्ते, क्षुभितं मे मनः, प्रसन्नं मे मनः' इति । एवञ्च मनसः करणतया [2]व्यपदेशो बुद्ध्यहंकारयोरिव वृत्तिभेदप्रदर्शनपरः पूर्वेषामिति । (मनोऽचैतन्यनिगमनम्)

[3]उच्यते—यदि बुद्धिरेव मनः, यदि वा द्रव्यान्तरम्, उभयथापि तस्य न चेतनत्वमिति किमनेनाप्रतिज्ञातस्वरूपविमर्शेन ॥

(प्राणात्मवादोपक्षेपः)

अस्तु तर्हि प्राण [4]एवाऽऽत्मा, तथासति तदन्वयिनि शरीरे सात्मकत्वप्रतीतिः, तद्विरहिणि निरात्मकत्वप्रतीतिश्चोपपद्येयाताम् । देहादुत्क्रान्तिर्लोकान्तरगमनं देहान्तरसञ्चारश्चोपपद्यन्तेतराम्, गत्वरस्वाभाव्यात् प्राणस्य । [5]इतरथा परममहतो महतश्च स्पर्शविरहिणः परिस्पन्दानुपपत्तेरुत्क्रान्तिगत्यागतिश्रुतयो भाक्तास्स्युः ।

(तत्खण्डनम्)

इदमप्यसत्, वायुत्वादेव बाह्यवायुवत् प्राणस्य चैतन्यानुपपत्तेः । [6]वृत्तिहीनेप्यात्मनि

---

1. नवममिति तार्किकं प्रति तदनुसारेण । 2. बुद्ध्यपेक्षया पृथक्करणतया व्यपदेशः इत्यर्थः । एकमेव करणं मत्यध्यवसायाभिमानचिन्तावृत्तिभेदान्मनोबुध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इति । यद्वा मनसो भौतिकत्व इव सात्त्विकाहङ्कारजन्यत्वेऽपि मोक्षदशानुवृत्त्ययोगादत्र बुद्धिपदं धर्मभूतज्ञानपरम् । तदेव मन इति । अतएवात्रावस्थाभेदानामपरोक्षत्वकथनमपि सुश्लिष्टम्; **मनसः करणतयेत्यत्र** पृथगिति शब्दाश्रवणञ्च । अयमर्थः-धर्मभूतज्ञानस्य कार्यगुणात्मकस्य करणतया व्यपदेशो वृत्तिभेदात् । ज्ञानद्रव्यमेवेन्द्रियसंयोग-संस्कारादिव्यापारं सत् करणम् । तदेव प्रत्यक्षस्मरणाद्यवस्थापन्नं कार्यम् । करणावस्थायामेव मनश्शब्दः; यथाऽहङ्कारे बुद्धिशब्दस्तत्तदविवक्षितवृत्त्यन्यवृत्तिविवक्षयेति । 3. एवं द्रव्यान्तरप्रतिक्षेपे सिद्धान्त्येकदेशिना कृते स्वयमुपयुक्तमुत्तरमाह **उच्यत** इति । 4. प्राणस्येन्द्रियादि सर्वनिर्वाहकतया श्रैष्ठ्यं लोकवेदप्रसिद्धम् । 5. **इतरथेति** । आत्मा न स्वयमुत्क्रान्तिगत्यागतिमान् परममहत्त्वात्, महत्त्वे सति स्पर्शरहितत्वाच्चेति उत्क्रान्त्यादिरहितोऽप्यात्मा शरीराद्युपकरणगतमुत्क्रान्त्यादिकमादाय तद्वत्तयोपचर्यत इति वक्तव्यमतिरिक्तात्मवादे । प्राणात्मवादे न स क्लेश इति भावः । 6. ज्ञानादिक्रियाहीने ।

सुषुप्तौ प्राणस्य वृत्तिमत्त्वाच्च । तद्वृत्त्या हि सुप्तस्यापि सप्त[1]धातुभावेन [2]अशितपीतद्रव्यपरिणामः, श्वासप्रश्वासौ च । [3]तनुतरतेजोऽवष्टम्भानुविद्धः कौष्ठ्यमारुतो हि प्राणः । स च कण्ठमुखनासाभ्यन्तरे बहिश्च रेचितः त्वचा स्पृश्यमानो घटादिरिव स्फुटमनात्मतया चकास्ति ।

[4]किञ्च—निरस्तो देहचैतन्यप्रतिषेधप्रकारतः ।

प्राणात्मवादो न पृथक् प्रयोजयति दूषणम् ॥ ९ ॥

[5]अविभुत्वेनास्याऽऽत्मनः (अविभोरात्मनः) स्पर्शविरहिणोऽपि प्रय[6]त्नादृष्टप्रेरणानुगुण्येन मनस इवोत्क्रान्तिगत्याद(त्यागत)यो युज्यन्त इति न तन्निर्देशानाममुख्यार्थता । परिमाण[7]-निरूपणेऽप्येतत् भविष्यतीत्यलमधुना ॥

(धिय आत्मत्वशङ्का-भाष्यार्थदर्पणसहित भाष्यग्रन्थे पु. 43)

भवतु तर्हि संविदेवाऽऽत्मा अजडत्वात् । जडत्वप्रति[8]बद्धं ह्यनात्म्यं घटादिषु दृष्टम् । जडत्वञ्च संविदो निवर्तमानं तदपि निवर्तयति । अजडत्वञ्च संविदः सत्तयैव प्रकाशमानत्वात् । न हि सती संवित् घटादिरिवाप्रकाशमानाऽवतिष्ठते, येन परायत्तसिद्धिरास्थीयेत ।

(भाट्टमतेन धियो जडत्वशङ्का)

स्यान्मतम्—जातायामपि संविदि विषयमात्रं प्रथते । न खलु नीलमिति प्रतियन्तः तदैव अनील[9]मनिदंरूपमपि संवेदनं प्रतीमः । अतः स्वरूपसत्तयैव संविदा इन्द्रियसन्निकर्षेणेव

---

1. रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः । अन्नादेः रसाद्युत्तरोत्तरात्मना क्रमेण परिणामः ।
2. प्राणविशेषो हि समानाख्यो जाठराग्नेः सहायीभूय भुक्तपीतयोः परिणामं जनयति । उक्तञ्च प्रश्नोपनिषदि, कानि स्वपन्ति सुषुप्तौ, कानि जाग्रतीति पृष्ट्वा, प्राणविशेषाः अग्निश्च जाग्रतीति ।
3. तनुतरेत्यत्र तनुगतेत्यपि स्यात् । कौष्ठ्यमारुतः शरीरे जठरसंबन्धी समानोपि प्राण एव । स हृदयादिप्रदेशे त्वगिन्द्रियाग्राह्योपि कण्ठान्तरे मुखान्तरे नासिकान्तरे च अहमिदं स्पृशामीति आत्मभिन्नत्वेन इदन्त्वेनानुभूयत एवेत्यर्थः । 4. किञ्चेति । सावयवे देहे किं प्रत्यवयवं चैतन्यम् अवयविनि वेत्यादि विकल्पदूषणादिकं भाव्यमिति । 5. अविभुत्वेनेति । परममहत्त्वादिर्हेतुरसिद्ध इति भावः । 6. स्वप्रयत्नस्य, अदृष्टस्य, मुक्तावीश्वरादिप्रेरणायाश्चानुरोधेन । 7. व्यापीत्येतद्विवरणासरे । 8. जडत्वप्रतिबद्धं जडत्वव्याप्यम् । प्रतिबन्धः-व्याप्तिः । व्यापक निवृत्तौ व्याप्यनिवृत्तिरनुभवसिद्धा । अतो व्यतिरेकव्याप्तिमुखेनास्य हेतुत्वमिति भावः । सत्तयैव प्रकाशमानत्वात्-स्वेतरानधीनप्रकाशवत्त्वात् । अयं हेतुरसिद्धः अनुमानाधीनप्रकाशत्वादिति भाट्टः शंकते स्यादिति । न खल्विति । (भा. भा. ३९.) नीलमिदमिति ज्ञानं न ज्ञानप्रकाशकम् नीलेदमर्थमात्राकारवत्त्वात् । ज्ञानस्य नीलात् इदमर्थाच्च भिन्नत्वादित्यर्थः ।

विषयः प्रकाश्यते । ततश्च तद्गतागन्तुकप्रका[1]शातिशयदर्शनेन पश्चात् संविदनुमास्यत इति ।

( ज्ञातताखण्डनेनाजडत्वोपपादनम् )

तन्न ; ज्ञानव्यतिरेकिणोऽर्थधर्मस्य प्रकाशस्य निपुणमपि निरीक्षमाणानां रूपादिवत् अनुपलब्धेः । उभयाभ्युपेतसंविदैव सकलव्यवहारोपपत्तौ च तत्कल्पनानुपपत्तेः । वित्तिवेदितृप्रतिभासशून्यायां च विषयवित्तावभ्युपगम्यमानायां, 'घटस्तावदयम्, अहं तु जानामि न वेति न ज्ञायते' इति च कदाचित् प्रतिभासः स्यात् । न चैवमस्ति ॥

[2]अतीतानागतविषयग्रहणस्मरणेषु व्याहारव्यवहारयोरभावे, भावेपि, ततः प्रागेव विदितत्वप्रतीतेः नानुमानिकी तत्र विषयप्रकाशसिद्धिः, नतरां तत्पूर्विका तत्र बुद्धिसिद्धिः । तथाहि-केनचित् प्रेरितः प्रणिधाय स्मृत्वाऽनन्तरमेव प्रतिवदति, स्मृतमद्य मयेति । न चायमेव व्याहारस्तत्र लिङ्गम्, तत्पूर्वक[3]त्वात्, अन्योन्याश्रयणापत्तेश्च । स्व[4]व्याहारेण स्वज्ञानानुमानं क इव निरपत्रपः प्रतिजानीत ?

(स्वयंप्रकाशत्वे हेत्वन्तरम् भा. भा 40-42)

अन्यच्च—यत्सम्बन्धादर्थान्तरे यो व्यवहारः, [5]धर्मभेदो वा, स तस्मिन्नुपलभ्य

---

1. **प्रकाशः** प्राकट्यं मीमांसकसंमता ज्ञातता ; तद्रूपोऽतिशयः । **अनुमास्यत** इति । नीलेदमर्थप्रकाशः कारणजन्यः कादाचित्कत्वादित्यनुमाने, स तत्पुरुषगतकारणजन्यः, तं पुरुषं प्रत्येव भावात् इति कारणस्य पुरुषगतत्वसिद्धौ परिशेषात् ज्ञानमेव तदिति सिद्ध्यतीति भावः । इदमेव ज्ञातता ज्ञानजन्या ज्ञातताखादित्यादिरूपेण कैश्चिल्लिख्यते ॥ घटः प्रकाशते, घटो ज्ञातः इत्यादिव्यवहारेण ज्ञानघटयोः संबन्धमात्रं सिद्ध्येत् । ज्ञानजन्यः प्रकाशो नाम विलक्षणो धर्मस्तु न सिध्यति । अतस्तदसिद्धौ न तेन ज्ञानानुमानमित्याह **तन्नेति** । **वित्तीति** । विषयेण सह ज्ञानं ज्ञाता अहमर्थश्च भासत इति प्राभाकरपक्षः । तदुभयभानं विना विषयभानमात्रस्वीकारे इत्यर्थः । **इति चेति** चकारेण ज्ञानं जातं न वा, जातस्य ज्ञानस्याश्रयोऽहं वाऽन्यो वेति प्रतिभासावपि स्यातामिति च दर्श्यते ।

2. किञ्चातीताद्यर्थानुमानादिस्थले प्राकट्यदर्शनायोगात् कथं प्राकट्येन बुध्यनुमानम् ? तत्र वाचिकव्याहारेण कायिकहानोपादानादिना वा प्राकट्यानुमानमिति न ; तत्र तयोरभावेपि विदितत्वज्ञानसत्त्वात् । तयोर्भावेपि, तदुत्पत्तेः प्रागेव विदितत्वज्ञानाच्च । 3. अयं शब्दप्रयोग एतज्ज्ञानजनक इति ज्ञात्वा किल व्याहारः क्रियते । ततो ज्ञानज्ञानं प्रागेवापेक्षितमिति । 4. परव्याहारं श्रुत्वा तेन परज्ञानानुमानमिष्टम् । यस्मादहमेवं व्यवहरामि, तस्मादेतद्विषये मे ज्ञानमस्तीति ज्ञायते इति स्वज्ञानानुमानं तु न कश्चिदिच्छेदिति । 5. **धर्मभेद**-प्राकट्यम् । अतिरिक्तात्मसत्त्वे तदधीनप्रकाशा संवित् स्वयंप्रकाशा न स्यादिति च भावः । अत्र अनुभूतिरनन्याधीनस्वव्यवहारा अनुभूतिरनन्याधीनस्वधर्मा च, स्वसंबन्धादर्थान्तरे तथाव्यवहारहेतुत्वात् तथाविधधर्महेतुत्वाच्चेति अनुमानद्वयम् । अत्र विस्तरः श्रुतप्रकाशिकादौ ।

मानस्तत्स्वरूपप्रयुक्तः, न तु तत्सम्बन्धनिबन्धनः । यथा सत्तासंबन्धात् पृथिव्यादिषु सद्व्यवहारः रूपसम्बन्धाच्च चाक्षुषत्वं [1]सत्तायां रूपे च । एवं संवित्सम्बन्धात् प्रवर्तमानो घटादिषु प्रकाशत(?) इति व्यवहारः, प्रकाशमानत्वं वा धर्मः संविदि तु परिदृश्यमानो न संवित्सम्बन्धापेक्षः, अपितु तत्स्वरूपप्रयुक्त इति स्वयंप्रकाशित्वात् सैवात्मेति ।

(लाघवादपि संविदतिरिक्तात्मनिरासः)

किञ्च योऽपि संविदोऽन्यं संवेदितारमभ्युपगच्छति, अभ्युपगच्छत्येवासौ संविदम् । न ह्यसत्यामेव संविदि, संवेत्तीत्युपपद्यते । एवं चेत्, उभयवादिसंप्रतिपन्नतया सैव [2]वरं वेदित्री भवतु ; किमन्येन कल्पितेन ।

(अहं जानामीत्यस्यातिरिक्तात्मासाधकत्वम्)

ननु अहं जानामीति ज्ञानातिरिक्तस्तदाश्रयभूतोऽयमात्मा प्रतीयते ॥ सत्यम् ; स तु विकल्परूपतया साक्षात्प्रत्यक्ष[3] इति न शक्यः संश्रयितुम् । भेदज्ञानसिद्धवत्कारेण पृथग्वस्तुतया – [4]गृहीताव्यभिचारेण सहोपलम्भनियमेन, [5]अप्रकाशात्मनश्च स्वभावविरोधादेव प्रकाशायोगात् प्रकाशस्वाभाव्ये च संवेदनत्वमित्यादिना वा प्रकाशात्मनोऽहमित्यंशस्य तत्त्वमेव दुरुपगमम् । (ग्राहकवत् ग्राह्यस्याप्यसत्यत्वमुक्त्वा निगमनम्)

ग्राह्यविक[6]ल्पप्रत्युद्धारेऽप्येष एव प्रकारः । अतो वासनाभिधानसमनन्तरप्रत्यय-

---

1. **सत्तायां रूपे च**ेत्यत्र, 'उपलभ्यमान' इत्यादिपूर्ववाक्यांशानुषङ्गः । **प्रकाशत इ**तीति । प्रकाशत इति पदार्थघटकः प्रकाशः संवित् । तत्संबन्धात् घटः प्रकाशत इति व्यवहारः । सैव चानुभूतिः । अतः अनुभूतिः प्रकाशत इत्यत्र न प्रकाशः कर्तृभूतानुभूत्यतिरिक्त इति ध्येयम् ।

2. (प्र. प. तत्त्वा--) 'सैव परं वेदित्री भवतु । कृतमन्येन बोद्ध्रा' इति पूर्वम्, पश्चात्तु, 'बुद्धिरेव वरमस्तु ; अलं बोद्ध्रेति यदुक्तम्' इति च परमिति वरमिति च दृश्यते ।

3. मुख्यप्रत्यक्षत्वसंश्रयणमशक्यम्, विकल्परूपत्वादित्यर्थः । 4. दृष्टव्याप्तिकेन संवित्सहोपलम्भनियमरूपहेतुनाऽहमित्यंशस्य प्रकाशात्मत्वं संविद्रूपत्वं सिद्धम् । अहमर्थः संविदभिन्नः नियमेन तया सहोपलम्भादिति । एवमहमर्थस्याप्रकाशरूपत्वे प्रकाशायोगः, प्रकाशाप्रकाशयोर्विरोधात् ; प्रकाशरूपत्वे च संवेदनत्वापत्तिरिति हेतुनापि । एवं संविदभिन्नस्याहमर्थस्य संविद्भिन्नत्वज्ञानं पारमार्थिकतया सिद्धवत्कृत्य संविदपेक्षया पृथग्वस्तुतया स्थितिर्दुरुपगमेत्यर्थः । **पृथग्वस्तुतये**त्यन्तस्य **तत्त्वमेव दुरुपगम**मित्यत्रान्वयः । 5. **अप्रकाशात्मन** इत्यादि अद्वैतिभिरुच्यत इति पकरण प. त. प्रकरणे । 6. ग्राहकरूपस्य विकल्पस्याहमर्थस्येव ग्राह्यरूपस्य घटादेरपि घटमहं जानामीति सहोपलम्भनियमादिना पृथग्वस्तुत्वनिरासे इत्यर्थः । **विकल्पो** नाम व्यावर्तकांशः **समनन्तरे**ति । अव्यवहितपूर्वेत्यर्थः ।

सामर्थ्यात् अनाद्यविद्यावशाच्च [1]समारोपितावास्तवग्राह्यग्राहकविकल्पोल्लेखिनी स्वयंप्रकाशा संविदेव परमार्थसती ; सैवाऽऽत्मेति सौगताः प्रकटाः प्रच्छन्नाश्च । यथाहुः प्रकटाः—

"[2]अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" इति ।

यथा वा प्रच्छन्नाः—"शुद्धं तत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः[3] ।
ज्ञातृज्ञेयविभागस्य मायैव जननी ततः ॥" इति ।

(प्रकटबौद्धमतखण्डनम्)

अत्राह— क्षणभङ्गिनी प्रतिविषयमन्यान्या च संवित् चकास्ति । सैव चेदात्मा, पूर्वेद्युर्दृष्ट[4]मपरेद्युः 'अहमिदमदर्शम्' इति कथमिव प्रत्यभिजानीयात् । न च निरालम्बनप्रतिभाभेदमात्रतया इह समाधेयम्, निरालम्बनत्वप्रतिज्ञायाः प्रत्यक्षादिसकलप्रतीतिबाधितविषयत्वात् । साधनस्य[5] च सालम्बनत्वे, तदविशेषादशेषशेमुषीणां तथात्वापत्तेः । निरालम्बनत्वे च साधनाभावादेव साध्यासिद्धेः । प्रपञ्चितश्च पूर्वोत्तरमीमांसाभाग[6]योः निरालम्बनत्वप्रतिषेधः ; यथार्थख्यातिसमर्थनेन च शास्त्र[7] इति न व्यावर्ण्यते ।

(सन्तानाश्रयणेपि प्रत्यभिज्ञाऽनिर्वाहः)

अत एव न सन्तानाश्रयणेनापि प्रत्यभिज्ञोपपादनं साधीयः । विज्ञान[8]क्षणव्यतिरिक्तस्य स्थायिनोऽनुसन्धायिनः सन्तानस्याभ्युपगमे स्वसिद्धान्तत्यागः, परसिद्धान्ताभ्युपगमश्च । अनभ्युपगमे प्रत्यभिज्ञानुपपत्तिः । न ह्यन्येनानुभूते अन्यस्य प्रतिसन्धानसम्भवः । न च

---

1. ग्राहकरूपस्य विकल्पस्याहमर्थस्येव, ग्राह्यस्य घटादेरपि पृथग्वस्तुत्वनिरासे घटमहं जानामीति सहोपलम्भनियमादिहेतूपन्यास एवाभिमतः । **विकल्पो** नाम व्यावर्तकांशः । 2. बुद्धिरूप आत्मा ग्राह्यग्राहकाभिन्नोपि भ्रान्तैर्भेदवानिव दृश्यत इत्यर्थः । 3. **अनिवृत्तिप्रसंगात्**—अनिर्मोक्षप्रसंगात् । 4. **दृष्टमिति, अपरेद्युरिति** च **प्रत्यभिजानीया**दित्यत्रान्वेति । 5. **साधनस्य** निरालम्बनत्वगमकपरामर्शस्य । 6. **भाग**पदेन पूर्वोत्तरमीमांसयोरैकशास्त्र्यं दर्शितम् । पूर्वभागे १-१. सत्संप्रयोगसूत्रवृत्तौ, उत्तरभागे च २-२. पादे । 7. **शास्त्रे**—**न्यायतत्त्वे** स्वपितामहपादप्रणीते । तत्समर्थनप्रपञ्चः श्रीभाष्ये द्रष्टव्यः, "यथार्थं सर्वविज्ञानम्" इत्यादौ ।

8. **विज्ञानलक्षणे**ति प्रायिकः पाठः । **विज्ञानक्षणे**ति क्वचित् (४५९७) । प्रभाकर विजये (९०), 'विज्ञानलक्षणसंतानस्थायितया' इति, 'अथ विज्ञानक्षणानां भेदेपि सौसादृश्यात् इति च लक्षणपदं क्षणपदञ्चोपलभ्यते । बौद्धाः स्वलक्षणपदेन व्यक्तिस्वरूपं व्यवहरन्ति । योगसूत्रे (३-१-३) लक्षणपदमतीतवर्तमानाद्यवस्थापरं दृष्टम् (भावागणेशवृत्तौ) । अतो विज्ञानलक्षणेति पाठप्रमाण्ये अतीताद्यवस्थविज्ञानव्यक्तीत्यर्थः स्यात् । क्षणशब्दार्थस्तु स्फुटः ; क्षणिकानामेव क्षणत्वेन व्यवहारात् ।

सुसदृशतया भेदाग्रहणेन प्रदीपादाविव प्रमातरि प्रत्यभिज्ञा भ्रान्तिः। [1]युज्यते हि तत्र एकस्यैव पूर्वापरव्यक्तिदर्शिनः तुल्यसंस्थानतया व्यक्तीनां भेदमविदुषस्तथाभ्रमः ; इह तु संविद्व्यक्तयः परस्परवार्तानभिज्ञाः निरन्वयविनाशिन्यश्च सुगतमते इति न तास्वेकत्व-भ्रमस्याश्रयता विषयता वा संभविनी। न च सदृशत्वेपि, अन्येन कृतमात्मकृततयाऽन्योऽनु-सन्धातुमलम्-इत्यागमापायिसंवित्सन्तानाश्रयः प्रत्यभिज्ञानक्षणस्थायी चेतनोऽभ्युपगन्तव्यः।

(एतद्दोषोद्धाराय प्रच्छन्नेन संविदजत्वनिर्विकारत्वनिर्भेदत्वस्थापनम्)

[2]कश्चिदाह-न संवित् अनित्या, प्रागभावाद्यसिद्धेः। तदसिद्धिश्च तस्याः स्वतस्सिद्धत्वात्। न हि स्वतस्सिद्धस्य प्रागभावादयः स्वतोऽन्यतो वा सिद्ध्यन्ति। स्वयं हि स्वाभावमवगमयत्, सद्वा असद्वा साधयेत्। सत्त्वे, अभाव एव नास्तीति कथं साधयेत्? असत्त्वादेव साधकस्य, पक्षान्तरे नतरां साधकत्वम्-इति न स्वतस्तावत् तत्सिद्धिः। नाप्यन्यतः, अनन्यगोचरत्वा-दनुभूतेः ; [3]अनुभाव्यत्वे च घटादिवत् अननुभूतित्वप्रसङ्गात्। अतः सा न जायते। जन्मा-भावादेवेतरेऽपि भावविकारा निराकार्याः ; तत्प्रतिबद्धत्वात् तेषाम्। अत एव नानात्वमपि संविदि प्रत्युक्तम्। उत्पत्तिमत्त्वव्यापकनिवृत्त्या तद्व्याप्यभूतनानात्वस्यापि निवृत्तिसिद्धेः। न ह्यजं विभाग्यस्ति। चेत्यत्वाच्च भेदेतरेतराभावादयो न तद्धर्माः, रूपादिवत्। अतोऽस्याः

---

1. प्रदीपदृष्टान्तेन प्रत्यभिज्ञानोपपादनं ग्रहीत्रैक्यमङ्गीकृत्य ग्राह्यमात्रभेदस्वीकारे स्यात्। ग्रहीत्रैक्यस्याप्य-स्वीकारे तु पूर्वप्रतिसन्धानाद्यभावेनाऽऽत्मनः प्रत्यभिज्ञाश्रयत्वायोगान्न किमपि प्रत्यभिज्ञाविषयीभवेदिति। 2. **कश्चित् इष्टसिद्धि**ग्रन्थकारो **विमुक्तात्म**नामा आगमापायिसंवित्सन्तानेत्युक्तमसहमानोऽद्वैती। **इयं संविदात्मशङ्कासमाधानसरणिः प्रायो जिज्ञासाधिकरणभाष्येऽनूदितैव। अनित्या**—उत्पन्ना। **स्वतस्सिद्धत्वात्** स्वयंप्रकाशत्वात्। स्वयंप्रकाशत्वं हि स्वेतराप्रकाश्यत्वविशिष्टस्वप्रकाश्यत्वम्। तत्र स्वकाले स्वप्रागभावाभावात्, स्वप्रागभावकाले च स्वाभावात् स्वप्रागभावस्य स्वप्रकाश्यत्वं न संभवति। नापि ज्ञानान्तरप्रकाश्यत्वम्, स्वप्रागभावस्य स्वात्मकप्रतियोगिनं विहाय प्रकाशनायोगात्, स्वस्य च स्वान्यग्राह्यत्वे स्वयंप्रकाशत्वघटकस्वेतराप्रकाश्यत्वदलभङ्गापत्तेरिति भावः॥ 3. तद्दलप्रवेशावश्यकतां दर्शयति **अनुभाव्यत्व** इति। **इतरे**—ऋद्धिपरिणामापक्षयविनाशाः। जन्मसत्तापरिणामवृद्ध्यपक्षयविनाशाः खलु षट् भावविकाराः। **तत्प्रतिबद्धत्वात्**-जन्मव्याप्यत्वात्। **अत एव** जन्माभावादेव। **उत्पत्ती**ति। उत्पत्तिमत्त्वरूपस्य व्यापकस्याभावेन। **नानात्वस्य** सजातीयभेदस्य। स एव **विभागः**। **भेदः** वैजात्यम्। "भेदः प्रसिद्धतरो लोके, इतरेतराभावश्च" (२ पु) **इतीष्टसिद्धि**वाक्यानुरोधेन भेदेतरेतराभावयोः पृथग्ग्रहणम्। यद्वा **विभागः** सर्वविधभेदः ; 'अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभागस्य' इति अत्र वक्ष्यमाणत्वात्। **इष्टसिद्धिग्रन्थे विभाग**शब्दस्य देशपरिच्छेदपरत्वप्रतीतावपि तत्रापि अजत्वहेतुना **अमेयानन्ते**ति कारिकोक्तमेयशून्यत्वत्रिविधपरिच्छेदराहित्ययोः साधनान्न तात्पर्यविरोधः। संवित्पक्षकानुमानमुक्त्वा धर्मपक्षकानुमानमाह **चेत्यत्वा**दिति। **चेत्यत्वं** चेतना-

न[1] मेयः कश्चिदपि धर्मोऽस्ति । अतो निर्धूतनिखिलभेद(दा)विकल्पनिर्धर्मप्रकाशमात्रैकरसा कूटस्थनित्या संविदेवाऽऽत्मा परमात्मा च । यथाह, "[2]याऽनुभूतिरजाऽमेयाऽनन्तात्मा" इति । सैव च वेदान्तवाक्यतात्पर्यभूमिरिति तेषां परिभाषा । यथाह तद्वार्तिककारः—

'परागर्थप्रमेयेषु या फलत्वेन संमता । संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥
अप्रामाण्यप्रसक्तिश्च स्यादितोऽन्यार्थकल्पने । वेदान्तानामतस्तस्मान्नान्यमर्थं प्रकल्पयेत् ॥' इति ।

(प्रच्छन्नमतभङ्गः)

तदिदमलौकिकमवैदिकं च दर्शनमित्यात्मविदः । तथाहि—

(लोकानुभवापेतत्वोपपादनम् भा. भा. 66, 62, 63)

'संविदिति स्वाश्रयं प्रति सत्तयैव कस्यचित्प्रकाशनशीलो ज्ञानावगत्यनुभूत्यादिपद-पर्यायनामा सकर्मकः संवेदितुरात्मनो धर्मः प्रसिद्धः । तथैव हि सर्वप्राणभृत्प्रत्यात्मसिद्धोऽयमनुभवः, 'अहमिदं संवेद्मि' इति । तस्यास्योत्पत्तिस्थितिनिरोधाश्च सुखदुःखादेरिव प्रत्यक्षाः प्रकाशन्ते । स्वापमदमूर्च्छादशासु च योग्यानुपलम्भनिराकृतस्तत्सद्भावो नाभ्युपगममर्हति । यदि हि तास्वपि दशासु संवेदनमवर्तिष्यत, ततः प्रबोधसमयेऽनुसमधास्यत । न चानुसन्धीयते । अत एव हि, 'इयन्तं कालं न किञ्चिदहमज्ञासिषम्' इति प्रबुद्धः प्रत्यवमृशति । यावदनुभूतपदार्थस्मरणनियमाभावेपि, संस्कारविच्छेदनिमित्तप्रायणादिप्रबलहेतुविरहेपि नित्य[3]वदस्मरणमनुभवाभावमेव साधयति । न च सत्यपि संवित्प्रकाशे विषयावच्छेद-विरहादहङ्कार[4]गोचरापायाद्वा तत्स्मृत्यनुदयः; [5]अर्थान्तराभावस्य तदग्रहणस्य चार्थान्तरप्रकाश

---

विषयत्वम् । 1. अतो नास्यानुमेयः इति, अतोऽस्यानुमेय इति च पाठः 'अनु' इत्यस्य व्यर्थत्वादप्यशुद्धः ; 'यदपि नास्या मेयो धर्मोऽप्यस्ति' इति वक्ष्यमाणानुवादानुसाराच्च ; इष्टसिद्धि-ग्रन्थानुरोधाच्च । तद्ग्रन्थे आदौ या इत्यनेन स्वतस्सिद्धत्वसूचनात् मेयभिन्नत्वस्य लब्धत्वात् अमेयेत्यत्र बहुव्रीहिः। तत्रामेयत्वं प्राक्विवृतम् ; अनन्तत्वं पश्चात् ; अत्रतु अमेयत्वं पश्चादिति भेदः। भेदविकल्पः भेदप्रकारः । 2. "याऽनुभूतिरजाऽमेयानन्तात्माऽऽनन्दविग्रहा । महदादिजगन्मायाचित्रभित्तिं नमामि ताम्" इतीष्टसिद्धिमङ्गलश्लोकः उपरि तद्वक्तव्यार्थसंग्रहरूपः । पराग्र्थेति । प्रमेयभूतबाह्यार्थविषये प्रमाणफलत्वेन कल्पिता, प्रमाणवृत्तिप्रतिबिम्बतया साङ्ख्यमता वा संविदेव वेदान्तोक्तं चिद्रूपं ब्रह्म । अन्यथा शशविषाणादिवदत्यन्ताप्रसिद्धार्थपरत्वे वेदान्तस्याप्रामाण्यापत्तिः । तस्मादतोऽन्यं—प्रसिद्ध-संविद्भिन्नमर्थं न कल्पयेदिति कारिकाद्वयार्थः । यद्वा सा संविदेवेह व्यवह्रियमाणो मेयः ग्राह्यग्राहक-रूपोऽर्थः । तदध्यस्तताहृगर्थापेक्षया अन्यवास्तवमेयकल्पने चाद्वैतवेदान्ताप्रामाण्यं स्यादिति ॥

3. नित्यवत् नित्येन तुल्यमस्मरणम् ; नित्यं तदस्मरणमिति यावत् । 4. अहमितिप्रतीतिविषयस्य विलयात्–अहमर्थविलयादित्यर्थः । 5. सुषुप्तौ अहमर्थाभावो विषयाग्रहणञ्च सुषुप्तिकालाभ्युपगतसंवित्प्रका-

प्रयुक्तकार्यप्रतिबन्धकत्वायोगात्। [1]त्रितयावभासेऽपि यथाक्रमवभासानां स्वगोचरस्मरणहेतुत्वात्। न च [2]प्रत्यभिज्ञाबललब्धस्थेमा अहमर्थः, स्वापादिदशासु निधनमुपगत इति शक्योऽभिधातुम्। अत एव हि, 'इयन्तं कालमहमस्वाप्सम्' इति प्रबोधे परामर्शः। न च निर्विषया निराश्रया वा संविन्नाम काचित् संभवति, अत्यन्तानुपलब्धेः। सम्बन्धिशब्दाश्च संविदनुभूतिज्ञानप्रकाशादिशब्दा इति शब्दार्थविदः। न ह्यकर्मकस्य जानात्यादेरकर्तृकस्य वा प्रयोगो लोके वेदे वा।

(संविदा स्वप्रागभावाद्यग्रहनिरासः)

यत्तु स्वतस्सिद्धस्य सत्त्वे तद्विरोधादेव प्रागभावादेस्तदानीमवस्थानासंभवान्न तत स्सिद्धिरिति—तदतिस्थवीयः। न हि संविदा स्वकालवर्तिन एवार्थाः सिद्ध्यन्तीत्यस्ति नियमः, अतीतानागतयोरसंवेद्यत्वप्रसङ्गात्। [3]अथ संवित्प्रागभावादेः सिद्ध्यतस्तत्समकालतया भवितव्यमिति; किमेवं[4] क्वचिद्दृष्टम्? हन्तैवं सति तत्सिद्धेर्न प्रागभावाद्यसिद्धिः॥ तत्प्रागभावः तत्समकाल इत्युन्मत्तवचः। ऐन्द्रियकप्रत्यक्षस्वभावो ह्ययं स्वसमकालपदार्थप्रकाशकत्वं नाम; न ज्ञानमात्रस्य, प्रमाण[5]मात्रस्य वा। एतेन (एतेनै?) तदपि पराकृतम्—

[6]'मानं स्वयंप्रकाशत्वात्' [7]स्वतस्सच्चेत् सदाऽस्त्यतः।
तन्मेयं च सदाऽस्त्येव मानं मेययुगेव हि॥' इति।

---

शाधीनजागरकालिक संवित्स्मरणरूपकार्यप्रतिबन्धके न भवतः; भिन्नविषयत्वात्। अन्यथा पृष्ठताडनेन दन्तभङ्गापत्तेरिति। 1. ननु सर्वस्मिन्नपि ज्ञाने ज्ञातृज्ञेयज्ञानत्रयभानस्य घटमहं जानामीत्याद्याकारबलादभ्युपेयत्वात् अन्वयव्यतिरेकानुविधानवशात् ज्ञात्रादिभानमपि ज्ञानस्मरणे हेतुः कल्प्यत इत्यत्राह' **त्रितयेति**। एकानुभवस्यान्यस्मृतिहेतुताया लोके अदर्शनेन तत्स्मरणं प्रति तत्प्रकाशो हेतुरित्यस्यैव क्लृप्ततया कल्पनान्तरे मानाभावात् ज्ञात्राद्यभानात् तदस्मरणेऽपि ज्ञानस्मरणं स्यादिति। **अपीत्यनेन** तदसंमतिः, तदादरे सुषुप्तौ ज्ञानस्याप्रकाश एव स्यादिति च सूच्यते। 2. **प्रत्यभिज्ञा**—योऽहं पूर्वेद्युर्गामपश्यम्, सोऽहमिदानीं क्रीणामीत्येवंरूपा। **निधनं** नाशम्।

3. नन्वर्थान्तराणामतीतानागतानां ग्रहणमस्त्येव। संवित्प्रागभावतद्ध्वंसादिविषय एवायं नियमः, यत्र गृह्यमाणत्वविशिष्टसंवित्प्रागभावत्वादि, तत्र तत्समकालत्वमित्याकारक इति शङ्कते **अथेति**। 4. **एवमिति**। संवित्प्रागभावस्य परं समकालवर्तिसंविदा ग्रहणमितीदमित्यर्थः। 5. **प्रमाणमात्रस्य**—प्रमितिसामान्यस्य। 6. **मानमिति**। माने स्वयंप्रकाशत्वस्य अत एव स्वतःप्रामाण्यस्य च इष्टत्वात् तस्य सत्त्वे, यत् सत् तत् सर्वदैव सदिति न्यायेन सदा सत्त्वमिति तत्प्रमेयस्यापि सदातनत्वमेव, मानस्य मेयाव्यभिचारित्वादित्यर्थः। अतो मानमेव न स्वीकार्यम्; नित्यमेयमात्रं वा स्वीकार्यमिति भावः। 7. स्वयंप्रकाशत्वात् स्वतो मानभूतं सच्चेत्, सदाऽस्तीत्यर्थः। स्वतस्सदित्यन्वयो वा।

**न हि मानस्य स्वसत्ताकालेऽर्थाविनाभावो [1]मेययोगः, किन्तु यद्देशकालादिमत्तया मेयमवभासते, तादृशतद्रूपमिथ्यात्वविरोधित्वम् ।**

(भा. भा. 59. पु.)

**अत एव 'स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनात्' इत्यपि प्रलापः ।**

(प्रमाणाभावात् प्रागभावासिद्धिरित्यस्य भङ्गः)

**अथ संवित्प्रागभावादेरवर्तमानतया न प्रत्यक्षत्वम् । लिङ्गाद्यभावाच्च न प्रमाणान्तर-तत्सिद्धिरिति—यद्येवम्, [2]अकारणं तर्हि स्वतःसिद्धत्वं प्रागभावाद्यसिद्धेः । प्रमाणाभाव एव हीदानीं वाच्यः ; न च तदभावः शक्योऽभिधातुमित्युक्तमेव, योग्यानुपलब्ध्यैवाभावस्य समर्थितत्वात् ।** (कादाचित्कत्वे युक्त्यन्तरम् भा. भा. 61)

**अपिच[3] प्रत्यक्षसंवित् स्वसत्ताकाले स्वविषयस्य सद्भावं साधयन्ती यत् तस्य न सर्वदा सत्तां साधयति, तदवसीयते, 'अहमिदानीमेवास्मि नान्यदा' इति कालविशेषावच्छिन्नैव सा चकास्तीति । [4]इतरथा घटादेरपि नित्यत्वप्रसङ्गात् । [5]एवमनुमानादिसंविदोपि । न च**

---

1. **मेययोगः** मेयेन नियतयोगः । मानस्य मेययुक्तत्वं न स्वसत्ताकालव्यापिस्वमेयकत्वम्, किन्त्वबाधितमेयरूपकत्वम् । अयमपि कश्चिदविनाभावप्रकार इति **श्रीभाष्ये** । नायं समानकालिकत्व-घटितः, किन्तु तन्मितिः तन्मेयनिरूपितप्रकारतासंबन्धेन यद्देशकालादौ, तन्मेयं दैशिककालिकस्वरूपादि-संबन्धेन तत्रेत्येवंरूप इति । प्रसिद्धश्च प्रमायाः प्रमेयाविनाभावः । अत एव न्यायसूत्रादौ 'अव्यभि-चारि' इति भ्रमवारणं क्रियते । अत्रापि **युगेव हीति** हिशब्दैवकाराभ्यां मेययोगनियमप्रसिद्धिर्दर्शिता । **प्रलाप** इति । स्मृतेरप्रामाण्यं सर्वेष्टम् । तत् कस्मात्? न याथार्थ्याभावात्; किं तु अतीतादौ अर्थ-संबन्धाभावात् । वर्तमानार्थस्मृतावप्यप्रामाण्यादेवार्थसंबन्ध एष्टव्यः । स्मृतिस्थले इन्द्रियद्वाराऽर्थ-संबन्धो दुर्वच एवेत्यादिप्रलाप इत्यर्थः ॥ यथार्हं स्मृतावपि प्रामाण्यमिष्टमिति सिद्धान्ती । 2. **अकारण-मिति** । **असिद्धेः**-प्रागभावो नास्तीत्येतत् प्रति स्वतःसिद्धत्वं न हेतुर्भवेत्; किन्तु प्रमाणाभाव एव । स च नास्ति; प्रागभावस्यानुपलब्धिप्रमाणकत्वात् संविदनुपलब्ध्यैव संवित्प्रागभावस्योक्तत्वात् (पु. २७-२८) । 3. प्रत्यक्षं कालविशेषावच्छिन्नं भाति; स्वकाल एव विषयप्रकाशकत्वे सति कालविशेषावच्छिन्नतया तत्प्रकाशकत्वादिति युक्त्यन्तरमाह **अपिचेति** । ज्ञानस्वप्रकाशस्य ज्ञानविषयकप्रत्यक्षतुल्ययोगक्षेमत्वात् प्रत्यक्षेणेव तेनापि प्रकृतकालावच्छिन्नतयैव ज्ञानभानम् । तत्रानया युक्त्या प्रत्यक्षसंवित् स्वस्मिन् किञ्चित्कालावच्छिन्नत्वभानं कालान्तरानवच्छिन्नत्वविशिष्टमनुमापयतीति । **अहमिति** संविदुच्यते । संविदिदानीमेवास्ति नान्यदेति पुरुषो मन्यत इति वस्तुस्थितिरिति तथैव प्रमेये वक्तव्ये, अहमिदानीमेवा-स्मीति प्रतीतिपराहंपदघटितवाक्यनिर्देश औपचारिकः; घटो गुणमाकाङ्क्षति, भावना अंशत्रयमपेक्षत इत्यादिवत् । सर्वत्राऽऽकांक्षाया इच्छारूपतया पुरुषनिष्ठत्वात् । 4. **इतरथेति** । प्रत्यक्षसंविदः सर्वकालेऽपि भाने इत्यर्थः । सर्वकालावच्छिन्नत्वे इति वा । 5. **एवमिति** । अनुमानादिसंविदोऽपि कालविशेषावच्छिन्ना

प्रत्यक्षानुमानादिभेदशून्या निर्विषया निराश्रया धीः सम्भवतीत्युक्तमेव ।

(संविदोऽननुभाव्यत्वभङ्गः भा. भा. 55. 56)

नचान्याविषयत्वात् संविदः अन्यतस्तत्प्रागभावाद्यसिद्धिः ; अज्ञासिषमिति प्राक्तन-संविदोऽद्यतनधिया विषयीक्रियमाणत्वात् । प्रतिकूलानुकूलविषयनियतहानोपादानादि-लिङ्गावगम्यत्वाच्च[1] परसंविदः । तदनभ्युपगमे च [2]शब्दार्थग्रहणासंभवेन वैदिकलौकिक समस्तव्यवहाराभावप्रसङ्गः । गुरूपसर्पणाद्यनुपपत्तिश्च ; ज्ञानवत्त्वेन तस्याप्रतीतेः ।

(अनुभाव्यत्वेऽनिष्टापादनपरिहारः)

न च अन्यविषयत्वेऽननुभूतित्वम् । स्वाश्रयस्य स्वसत्तयैव प्रकाशमानत्वं स्व[3]विषय साधनत्वं वा ह्यनुभूतित्वम् । ते च संविदन्तरविषयभावेपि स्वानुभवसिद्धे न भ्रश्यत इति कथमननुभूतित्वप्रसङ्गः ? घटादेस्तु तथास्वाभाव्यादेवाननुभूतित्वम्, नानुभाव्यत्वात् । अपिचाननुभाव्यत्वेपि समानस्तत्प्रसङ्गः[4], गगनकुसुमवत् । न चाऽऽत्मनोऽनुभूतित्वम्, अनुभवितृत्वात् । नाप्यसावनुभाव्यः, अनुभवस्येव स्वतस्सिद्धयतोऽप्यस्य स्वपरसंवेद्य[5]त्वाभ्यु-पगमात् । वेद्यत्वेऽनात्मत्वापादनमवेद्यत्वेऽपि समानं [6]पूर्ववत् । यदि तु गगनकुसुमस्या-सत्त्वमेवानात्मत्वाननुभूतित्वप्रयोजकमास्थीयेत, आस्थीयतां तर्हि घटादेरप्यसंविदाश्रयत्वा-ज्ञानाविरोधित्वयोरेव तत्प्रयोजकत्वम् । अथ ते[7]अपि विषयत्वे स्यातामिति चेत्, अविषय-

---

एव चकासतीत्यर्थः । ननु भूतभविष्यद्विषयकानुमितेरपि संभवात् प्रत्यक्षस्येव न समकालवर्तित्वं तत्रेति चेत्—न; अनुमानादिसंविदां नित्यत्वे तदपेक्षया भूतत्वभविष्यत्त्वयोः कुत्रापि दुर्वचत्वात् । किञ्च धूमादिरूपहेतुप्रत्यक्षबलात् धूमनित्यत्वे तद्व्यापकस्याग्नेरपि नित्यत्वमवर्जनीयम् । अतः तासां सर्वकाला वच्छिन्नत्वेपि विषयनित्यत्वापत्तिः । यत्रानुमितिः शाब्दधीरन्या वा संवित् स्वकालवर्तमानतया घटादि-ग्राहिणी, तत्र तस्याः सर्वकालावच्छिन्नत्वे तद्वस्तुनित्यत्वापत्तिरिति च । पूर्वकालाद्यवच्छिन्नतयाऽभान-रूपयोग्यानुपलब्ध्या संवित्सामान्यानित्यत्वं प्रागेवोक्तम् । तत्र सति इयमपि यथासंभवं युक्तिः । एवञ्च एवमित्यस्य प्रत्यक्षवत् वर्तमानविषयग्राहिण्य इत्यप्यर्थो भवेत् । तदोद्देश्यविशेषणम् । एवं कतिपय-संविदनित्यत्वे तत्सामान्यादितरत्रापि तथात्वं युक्तमिति च भावः । विस्तरस्त्वन्यत्र ।

1. **लिङ्गे**ति । अयमेतद्विषयकप्रतिकूलताज्ञानवान् एतत्कर्मकहानकर्तृत्वात्, एतद्विषयकानुकूलता-ज्ञानवान्, एतदुपादानकर्तृत्वादित्येवम् । 2. **शब्दार्थग्रहणे**ति । अस्य शब्दस्यायमर्थ इति ग्रहणेत्यर्थः; **शब्दार्थसंबन्धग्रहणे**ति यावत् । तथैव पाठो वा । वृद्धव्यवहारादेः प्रयोज्यवृद्धादिज्ञानानुमापकत्वमुखेनैव शब्दार्थग्राहकत्वादिति भावः । 3. जडभूतज्ञानवादिनैयायिकादिसाधारण्यायेदम् । 4. **तत्प्रसंगः** अननुभूतित्वप्रसङ्गः । 5. स्वकीयपरकीयधर्मभूतज्ञानविषयत्वोपगमात् । 6. **पूर्ववत्** गगनकुसुमवत् । 7. संविदात्मनोर्वित्तिविषयत्वाङ्गीकारे घटादेरिव क्रमेणाज्ञानाविरोधित्वासंविदाश्रयत्वे स्यातामिति चेत्-

स्वेपि तथैवेत्यलमप्रतिष्ठितकुतर्कोपहसनेन ॥

(अजत्वस्य विकारान्तरावारकत्वम् भा. भा. 64)

यदपि जननविरहादनुभूतेर्विकारान्तरनिरसनम्, [1]व्यभिचरति तदपि प्रागभावे। जन्माभावेपि तस्य विनाशदर्शनात्। भावविशेषणोपादानेपि भवदभिमताविद्ययाऽनैकान्त्यम्। सा ह्यनादिरपि विविधविकारवती; विनाशवती च तत्त्वज्ञानोदयात्॥ अपरमार्थास्तद्विकाराः सन्तीति चेत्—परमार्थाश्च ते[2] किं विकाराः सन्ति, जन्मवन्तो [3]वा परमार्थाः, येन पारमार्थ्येन विशेषणं साध्यस्य साधनस्य वाऽर्थवत्तामश्नुवीत? तथा च सति साधु समर्थितं तर्ककुशलेनेत्यलमनेन॥ (अजत्वेन निर्भेदत्वानुमानायोगः)

यदपि, 'न ह्यजं विभाग्यस्ति' इति—तदपि न; [4]अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभागस्य समर्थितत्वात्[5]। अनादित्वेनाभ्युपगतस्याज्ञानस्य, आत्मनो व्यतिरिक्ततयाऽवश्याश्रयणीयत्वात्॥ अपरमार्थः स विभाग इति चेत्—परमार्थभेदः किं जन्मप्रतिबद्धः क्वचिद्दृष्टः? निर्बाधप्रतीतिसिद्धश्च[6] दृग्दृश्यभेदः परमार्थ एवेत्यनन्तरमेवोपपादयिष्यामः।

(संविदो निर्धर्मकत्वानुमाने व्यभिचार-व्याघातादि भा. भा. 65)

यदपि 'नास्या मेयो धर्मोऽप्यस्ति', 'चेत्यानां न चिद्धर्मत्वम्' इति च—तदपि शास्त्रानुमानादिप्रमाणसिद्धैः स्वयंप्रकाशत्वनित्यत्वादिधर्मैः स्वयमभ्युपगतैरनैकान्तिकम्। न च ते चितिमात्रमिति वाच्यम्—तत्सिद्धावपि तेषु विमतिदर्शनात्। अभ्युपगम्यैव हि संविदं तदनुमेयत्वक्षणिकत्वादि प्रतिजानते वादिनः। [7]स्वरूपभेदाच्च;-स्वाश्रयं प्रति सत्तयैव कस्यचित्प्रकाशनं हि संवेदनम्। स्वयंप्रकाशता तु सत्तयैवाऽऽत्मने प्रकाशमानता। प्रकाशश्च चिदचिदशेषपदार्थसाधारणो [8]धर्म इति संवित्सिद्धावेव साधितम्। तदनभ्युपगमे तु व्यवहारानुगुण्यवचनः प्रकाशशब्दः। नित्यता तु सर्वकालवर्तमानता। एकसंख्यावच्छेदः एकत्वम्-इति। न [9]च जडत्वकालदेशनानात्वाद्यवच्छेदशून्यतारूपत्वात् तेषां न यथोक्तदोष

---

भवेद्यत्वपक्षेपि गगनकुसुमवत् तत्र तत्र तत्तत् स्यादित्यर्थः।

1. स्वरूपासिद्धौ सत्यां दोषान्तरमप्याह व्यभीति। तदपीति। अपिना अनुभूतित्वसमुच्चयः। यथा अननुभाव्यत्वसाधकोऽनुभूतित्वरूपहेतुर्व्यभिचरति, अज्ञासिषमित्यनुभाव्यव्यक्तावपि सत्त्वात् तथेति। 2. ते-तव। 3. किं सन्तीत्यनुषङ्गः। 4. विभाग इत्यनेन भेदसामान्यविवक्षायामनुपपत्तिमाह अजस्येति। सजातीयभेदराहित्यं संविन्नानात्वदर्शनाद्बाधितमित्युक्तम्। 5. समर्थितत्वात्; अत्र, इष्टसिद्धौ च। 6. सिद्धत्वादित्यर्थः 7. धर्म्यभिन्नाभिन्नस्य तदभिन्नत्वनियमात् धर्माणां मिथस्स्वरूपभेदोपि न स्यादिति भावः। 8. धर्मः प्राकट्यरूपः; यद्वा तस्य मीमांसकमतस्य पूर्वं पश्चाच्च खण्डनात् वक्ष्यमाणो ज्ञानादूरत्वरूपोऽर्थधर्मः। अस्य धर्मिरूपत्वं न भवति, किन्तु धर्मत्वमेवेति संवित्सिद्धौ 'संविदेव न ते धर्माः सिद्धायामपि संविदि' इति साधितम्। 9. जडत्वानवच्छिन्नत्वं स्वयंप्रकाशत्वम्, कालानवच्छिन्नत्वं नित्यत्वम्,

इति युक्तम् ; तथारूपेऽपि तैश्चित्विधर्मभूतैरनैकान्त्यस्यापरिहार्यत्वात् । संविदि च निषेध्यत्वाभिमतजडत्वानित्यत्वनानात्वादिविविधधर्माभावे निषेधोक्तिरुक्तिमात्रमेव ॥ चेत्य[1]श्चाज्ञानमात्मनि दृष्टमिष्टश्च भवताम् ॥ अपिच 'अस्याः' इति षष्ठ्या अनुभूतेस्सम्बन्धमभिधाय निर्धर्मत्वं प्रतिज्ञायमानं, वन्ध्यात्वमिव जनन्याः, विरुद्धार्थमापद्येत ।

सिद्धिश्चेदभ्युपेयेत संविदः, स्यात् सधर्मता ।
न चेत्, तुच्छत्वमेवोक्तं भवेच्छशविषाणवत् ॥ १० ॥

ननु-सिद्धिरेव [2]सा ; कस्य भोः ? यदि न कस्य चित्, न तर्हि सिद्धिरेव । सा हि पुत्रत्वमिव कस्यचित् किञ्चित् प्रति । आत्मन इति चेत्-कः षष्ठ्यर्थः ? तदेवं व्योमारविन्दसदृशवपुषि यथोदितदृशि वेदान्ततात्पर्यवर्णनं [3]वेदान्तायैव स्यात् ।

(प्रच्छन्नपक्षेपि प्रत्यभिज्ञानुपपत्तिः भा. भा. 66)

[4]अपिच नित्यत्वेऽप्यनुभूतेः प्रत्यभिज्ञानुपपत्तिस्तदवस्थैव । स ह्यनुभवितारं पूर्वापरकालावस्थायिनमुपस्थापयति, अहमिदमन्वभूवमिति । अनुभूतिस्त्वनुभूतिरेव भवताम्, न तां प्रति सा कर्त्री कर्म वा ।

(आत्मनि ज्ञातृत्वस्याध्यस्तत्वानुपपत्तिः भा भा. 72)

यद्युच्येत-परमार्थतस्तथाभूतापि भ्रान्त्या अनुभवितृतया परिस्फुरति, रजततयेव शुक्तिः । [5]न हि तथ्यमनवलम्ब्य मिथ्यावभासस्योत्थानमिति-तन्न, तथासत्यनुभवसमानाधिकरणतया अनुभविताऽहमर्थः प्रकाशेत, 'अनुभूतिरह'मिति, [6]पुरःस्थितभास्वरद्रव्यशङ्ख-मुख-चन्द्रादेराकारतयेव रजत-पीत-मुकुरस्थता-द्वित्वादि । पृथगवभासमान एव त्वय

देशानवच्छिन्नत्वं विभुत्वम्, नानात्वानवच्छिन्नत्वमेकत्वमित्येवमभावरूपत्वात्, अभावस्य चाधिकरणरूपत्वान्न दोष इत्याशङ्क्य अभावरूपत्वेपि नाधिकरणस्वरूपत्वमित्याह **संविदी**ति । 1. अनभ्युपगताधिकरणस्वरूपताकमपि किञ्चिद्दर्शयति **चेत्यश्चे**ति । **विरुद्धार्थम्** — पक्षनिष्ठस्वविरुद्धधर्मकम् । 2. सिद्धिसंविदोरैक्यात् **संविदः सिद्धि**रिति व्यधिकरणप्रयोगो न कार्य इति भावः । 3 **वेदान्ताय**-वेदविनाशाय । 4. एवं, 'कश्चिदाह' इत्यादिनाऽनूदितं क्रमेण निरस्य, अथ ज्ञानमात्रनित्यत्ववाद्यद्वैतिमतेपि बौद्धमत इव प्रत्यभिज्ञानुपपत्तिः, तया ज्ञातुर्नित्यत्वस्यानुभूतेरनित्यत्वस्य चावगाहनादित्याह **अपिचे**ति । 5. अनुभूतिरपि परमार्थतो मा भूदित्यत्राह **नही**ति । अधिष्ठानं तु सत्यमपेक्षितमिति नानुभूतेरप्यपारमार्थ्यमित्यर्थः । 6. भास्वरद्रव्यस्याऽऽकारतया रजतता, शङ्खस्याऽऽकारतया पीतता, मुखाकारतया मुकुरस्थता, चन्द्राकारतया च द्वित्वं यथा प्रकाशते, तथाऽनुभूतिविशेषणतयाऽनुभवितृत्वं प्रकाशेत, ज्ञानमहमिति । अहंशब्दवाच्यादनुभवितुर्भिन्नतया त्वनुभूतिरवभासते, अहमर्थविशेषणतया च । अनुभवामीत्येतद्धि दण्डीतिवत् विशिष्टपरम्, न विशेषणमात्रपरमित्यर्थः । एतेन-अहंशब्देनाध्यस्तज्ञातृताकमनुभवमेवोक्त्वा

मनुभवः, दण्ड इव देवदत्तमर्थान्तरमहमर्थं विशिंषन् आलक्ष्यते, अनुभवाम्यहमिति। तदेवमनुभवविशिष्टमस्मदर्थमवभासयन् [1]अयमहम्प्रत्ययः कथमिव विशेषणभूतानुभूतिमात्रावलम्बनः प्रतिज्ञायेत, दण्डमात्र इव दण्डी देवदत्त इति प्रत्ययः ?

(अध्यासयुक्तिभङ्गः)

कुतश्चैष निश्चयः, अध्यस्तं ज्ञातृत्वमिति ? स्थूलोऽहमितिवत् देहात्माभिमानवतः प्रतिभासनादिति चेत्—नन्वात्मतयाऽभिमताऽनुभूतिरपि तद्वत एवावभातीति साऽपि तथा[2] स्यात्॥ तत्त्वज्ञानोदयात्परतोपि तदनुवृत्तेर्न तथा सेति चेत्—किं भोः ! तत्त्वज्ञानात्परम् अबोद्धैवायमात्मा ? हन्तैवं वरमितोऽतत्त्ववेदित्वम्। भ्रान्त्याऽपि हि तत्र बहु भद्रं पश्यतीति।

(ज्ञातृत्वस्याहङ्कारस्थत्वशङ्का भा. भा. 74)

ननु ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं विक्रियात्मकं जडमहङ्कारग्रन्थिस्थम्। [3]तत्फलभुक् अकर्ता अविक्रियः साक्षी प्रकाशमात्र आत्मा। कर्तृत्वादिर्हि दृश्यत्वात् रूपादिवन्नात्मधर्मः।

---

धात्वर्थानुभूतौ विषयविषयिण्यां तदभेदभानस्वीकारोऽप्यपास्तः, तिङन्तस्यानुभूतिमात्रपरत्वाभावात्; यदि जानामीति ग्रहणात् ज्ञातृतया भानम्, तर्हि तथाभानमहमर्थस्यैव, नानुभूतेः। न चाहंशब्दोऽनुभववाची। अहंशब्दस्यानुभवपर्यन्तार्थकत्वे मानाभावाच्च। अत एव—अहंशब्देनाहमर्थत्वमुखेन गौण्याऽनुभूतिरुच्यते सिंहशब्देनेव माणवकः। तत्रानुभवामीति ज्ञातृत्वभानमित्यपि—निरस्तम्; गौण्यां मानाभावात, अहमर्थे वास्तवानुभवितृत्वग्रहणेन प्रतीत्यभ्रमत्वस्य युक्तत्वात्। घटमनुभवामि, पटमनुभवामीत्यनुवृत्तधात्वर्थः परतत्त्वरूपानुभूतिरिति भवदुक्ततया स्वाभिमतिविरुद्धतया तस्या अहंशब्दार्थत्वायोगाच्च। एवम्-अहंशब्दोऽहमर्थविशिष्टानुभूतिपरः; तत्रानुभवामीत्यनुभूतिवैशिष्ट्यं भासमानं विशेष्यभूतायां धात्वर्थाभिन्नायामनुभूतौ बाधात् विशेषणेऽहमर्थे पर्यवस्यतीत्यपि अनुभवविरोधादिना निरस्तमेव। अहंशब्दः प्रत्यग्वाची; तत्र प्रतीचि अनुभवामीति वास्तवमनुभवितृत्वमित्येवानुभवात्।
1. अवभासयन्नयं प्रत्यय इत्येतावत् स्यात्। अहमित्यधिकम्। 2. तथेति। अध्यस्तेत्यर्थः। किमिति। 'निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्। भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते' इत्युक्तं स्मर्तव्यम्। अनुभवाभावे किं चिदानन्दरूपत्वस्वीकारेण ? भ्रान्त्येति। अत एव प्रलयापेक्षया सृष्टिः श्रेयसी। बह्विति। दुःखेपि सुखभ्रान्त्या सुखित्वमेव प्रायः। 3. नन्वहङ्कारस्य ज्ञातृत्वे तदतिरिक्ते आत्मनि किं मानम् ? तत्राह तत्फलेति। 'पुरुषोस्ति भोक्तृभावात्'। 'पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति ह्युच्यते। ज्ञानस्यान्तःकरणवृत्तेर्व्यापारात्मनोऽहङ्कारस्थता। भोगस्सुखदुःखगोचरस्साक्षिप्रकाश इत्यात्मनो भोक्तृत्वम्। तत्फलभुगकर्तेति विवक्षितमनुमानं विवरिष्यति दृष्टश्चेत्यादिना। ज्ञानकर्ता स्वान्यभोक्तृविशिष्टः कर्तृत्वात् अहम्प्रत्ययगोचरत्वाच्च देहवदित्यनुमानम्। अनात्मत्वं वा साध्यम्। अहमर्थे भोक्तृत्वमात्मसंबन्धबलादौपचारिकमिति पश्चान्निर्धीयत इति भावः।

कर्तृत्वे[1] ह्यात्मनः अहंप्रत्ययगोचरत्वेपि, देहस्येवानात्मत्वपरा[ग ?]र्थत्वजडत्वादिप्रसंगो दुर्निवारः। दृष्टश्च लौकिकवैदिककर्मसु कर्तृतया प्रसिद्धात् देहात् तत्क्रियाफलभुजः प्रमातुरहम्प्रत्ययिनः पृथक्त्वम्। तथेहापि प्रमातुरहमर्थाद्विलक्षणस्साक्षी प्रत्यगात्मेति युक्तम्॥

(तत्र लोकानुभवविरोधप्रदर्शनम्)

नैवं युक्तम्; अहं जानामीति ज्ञातृतया सिध्यतः प्रत्यगात्मनो व्यतिरेकेण साक्षिणो नाम प्रकाशमात्रस्यात्मनोऽनुपलब्धेः।[2]देहेन्द्रियमनःप्राणविज्ञानेभ्यो ज्ञानाश्रयतया विविच्यमाने प्रतीपमश्चतीव निर्भासमानोऽहंभाव एव हि प्रत्यक्त्वं नाम; साक्षित्वमपि तस्य साक्षाज्ज्ञातृत्वम्। न ह्यजानन्[3] साक्षीत्यपदिश्यते। सर्वश्च प्रकाशमानं ज्ञात्रे अहमिति चकासते[4] प्रकाशत इति प्रत्यात्मसिद्धोऽयमनुभवः, अहं जानामि, मह्यं प्रकाशत इति।

(अहङ्कारस्थत्वेऽनुपपत्तिः)

[5]न चाव्याकृतपरिणामभेदस्याहंकारनाम्नो बुद्धिनामधेयस्य वा ज्ञातृत्वम्, देहस्येव अचेतनत्वपरिणामि(म ?)त्वजडत्वपरार्थत्वादिहेतुभिस्तदनुपपत्तेः।

(छायापत्तिसंपर्काभ्यां ज्ञातृत्वारोप इत्यस्य भङ्गः भा. भा. 75)

[6]न च चितिच्छायापत्त्या तयोस्तत्संभवः, अचाक्षुषस्यच्छायाऽदर्शनात्।

---

1. **कर्तृत्व** इत्यादि। आत्मनः कर्तृत्वेऽहम्प्रत्ययगोचरत्वे च सतीत्यन्वयार्थः। 2. **साक्षी प्रत्यगात्मेति** वदतः, **प्रमातुरहमर्थाद्विलक्षण** इत्युक्तिर्व्याहतेत्याह **देहे**ति। **अश्चतीति** शत्रन्तं सप्तम्यन्तम्; वस्तुनीति शेषः। **इवे**त्युक्तिरञ्चुधातुमुख्यार्थाविवक्षासूचनाय। प्रतीपगामित्वञ्च वैलक्षण्यं ज्ञानाश्रयत्वमेव। 3. **अजानन्नि**ति। न हि कर्ता साक्षीति व्यपदिश्यते, किं तु निर्व्यापार इति परे। तत्र–न ह्यक्षिताकर्तृत्वरूपार्थरक्षणाय द्रष्टृरूपवाच्यार्थत्यागः; दर्शनकर्तैव च साक्षिशब्दवाच्य इति भावः। 4. **चकासत** इति शत्रन्तं चतुर्थ्यन्तम्। 5. देहदृष्टान्तादिस्त्वदुक्तस्त्वदनिष्टसाधक इत्याह **नचे**ति। अहंकारशब्दो बुद्धिशब्दश्चाहमर्थभिन्नत्वं बुद्धिमद्भेदञ्च साधयतः। अहमर्थः किं महत्तत्त्वरूपा बुद्धिः, तज्जन्योऽहङ्कारो वा, बुद्ध्यहङ्कारशब्दवाच्यमन्यत् मनस्तत्त्वं वा; सर्वथा अव्याकृतपरिणामत्वान्न ज्ञातृत्वमिति॥ 6. ननु साङ्ख्यरीत्या वृत्त्याश्रयत्वरूपं ज्ञातृत्वं प्रकृतिपरिणामे नानुपपन्नम्। एवमपि नित्यचैतन्यस्यैव ज्ञाधात्वाद्युपात्ततया अस्मदभिमतत्वात् ज्ञानानुभूत्यादिशब्दमुख्यार्थाश्रयत्वमनुभवसिद्धं कथं निर्वाह्यमिति भवत्प्रश्नः। तत्र चिच्छायापत्त्या वा चित्संपर्केण वा चिदाश्रयत्वभ्रान्तिरिति समाधिरिति शङ्कां क्रमेण क्षिपति **नचे**त्यादिना। **तयोः**–अहङ्कारे बुद्धौ च। यद्वा चिदहङ्कारयोः। अहङ्कारे छायापत्त्या ज्ञातृत्वम्। अथ तस्य चिति अपि अध्यास इति भावः। **छाया** प्रतिबिम्बः। चैतन्ये अहङ्कारः प्रतिबिम्बितः; अतो दर्पणस्थमालिन्यस्य मुख इवाहङ्कारे तत्प्रतीतिः; यद्वा चैतन्यमहङ्कारे प्रतिबिम्बितम्; तेन जले चन्द्रवत्त्वस्येवाहङ्कारे चिदाश्रयत्वस्य प्रतीतिः--इतीदमुभयमपि न भवतीति भावः।

न च [1]ज्ञातृत्वं चितावपि ते वास्तवमस्ति, येन, अग्निसंपर्कात् अयःपिण्ड इवौष्ण्यम्, तत्संपर्कादर्थान्तरे ज्ञातृत्वं जायेत, ज्ञायेत वा ॥

(अहङ्कारस्य व्यञ्जकत्वात् ज्ञातृत्वभ्रम इति शङ्का भा. भा. 76)

[2]यद्युच्येत—ज्ञप्तिमात्रमेवात्मानमभिव्यञ्जन् अचेतनोऽप्यहंकारः [3]स्वाश्रयतया तमभिव्यनक्ति। स्वभावो ह्ययं व्यञ्जकानाम्, यत् आत्मस्थतयाऽभिव्यङ्ग्यमभिव्यञ्जन्ति, दर्पण—जल—खण्ड मुण्डादय इव मुख—मिहिरबिम्ब—गोत्वादीन्। तत्कृतश्चायम्, अहं जानामीति भ्रमः। अत [4]एव खल्वहमुल्लेखविगमे सुषुप्तिमुक्त्योः स्वाभाविकविशदानुभवमात्ररूपेणाऽऽत्मनः प्रकाशः, तत एव चानात्मत्वमहमर्थस्य। तथाच सौरेशं वचः—

'आत्मनश्चेदहं[5] धर्मो यायान्मुक्तिसुषुप्तयोः।
यतो नान्वेति तेनायमन्यदीयो भवेदहम्' ॥ (नैष्क. २-३२) इति—

(तत्परिहारः भा. भा. 77)

तदिदमसंबद्धम्[6], यतः—

शान्ताङ्गार इवाऽऽदित्यमहङ्कारो जडात्मकः।
स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥ ११ ॥

[7]आत्मत्वाभिमताजडानुभवाधीना हि सर्वपदार्थाभिव्यक्तयोऽभिप्रेयन्ते। तादृशम् अशेषार्थसाधकम् उदयास्तमयविपरिवृत्तिशून्यप्रकाशस्वभावं तमनुभवं तदधीनसिद्धिरचित् अहंकारोऽभिव्यनक्तीत्युपहास्यमिदमात्मविदाम्।[1]

---

1. सम्पर्कपक्षं खण्डयति **नचेति**। **वास्तवमिति**। अग्नावौष्ण्यमिवेति शेषः।

2. व्यञ्जकत्वपक्षं शङ्कते **यदीति**। 3. **स्वाश्रयतया** स्वाश्रयकतया। **आत्मस्थतया** स्वगततया। 4. **अत एवेति**। व्यञ्जकत्वकृतत्वादेवेत्यर्थः। व्यञ्जकविलयादिति शेषः। 5. **अहम्**-अहन्त्वम्। **सुषुप्तेति** भावे क्तः। **भवेदित्यस्य अयमिति** कर्ता; अतः प्रथमपुरुषः। 6. **असंबद्धमिति**। अहङ्कारस्य चैतन्यव्यञ्जकत्वाच्चैतन्येऽहङ्कारवृत्तित्वभ्रम इत्युच्यते। तत्र व्यञ्जकत्वं, व्यक्तिस्वरूपं, व्यञ्जकत्वस्य तादृशभ्रमनियामकत्वं, सुषुप्तावहमुल्लेखविगम इत्यादि सर्वं दुर्वचमिति भावः। 7. ननु जडस्यापि दर्पणगोघृतादेर्मुखकुङ्कुमगन्धादिव्यञ्जकत्वं दृष्टम्; प्रकाशरूपादित्यादेश्चक्षुर्व्यङ्ग्यत्वञ्च। अतः कथमयुक्तिरित्यत्र दृष्टान्तयोरयं विशदयति **आत्मत्वेति**। दर्पणादिदृष्टान्तायोगो भाष्ये (७९) द्रष्टव्यः। अहङ्कारो नानुभूतिव्यञ्जकः तद्व्यङ्ग्यत्वात् अङ्गारवत्, अनुभूतिर्नाहङ्कारव्यङ्ग्या तन्निरपेक्षप्रकाशत्वादिति प्रयोगद्वयं विवक्षितम्।

1. ननूपकार्योपकर्तृभाव-स्तव्यस्तोतृभावादिकमिव व्यङ्क्तृव्यङ्ग्यभावोपि मिथः किं न भवति? न खल्वादित्याङ्गारस्थले अदर्शनमात्रेण निषेधसंभवः! एवं सिद्धान्ते निरपेक्षप्रकाशस्यात्मादेर्ज्ञानादिव्यङ्ग्यत्वस्यापि स्वीकारात् कथं व्यङ्ग्यत्वनिषेधोऽपीति हेत्वोरप्रयोजकत्वशङ्कायां प्रयोगद्वयमर्धद्वयेन समर्थ्यते

किञ्च—व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्यात् यथा घटे ॥ १२ ॥

दिनकरकरव्यङ्ग्यकरतलं तदभिव्यञ्जकं दृष्टमिति मा वोचः, करतलस्य तद्बाहुल्यमात्रहेतुत्वात् । तथाभूताश्च दिनकरमरीचयः स्फुटमुपलभ्यन्त इति न करतलव्यङ्ग्यत्वम् ॥

(अहङ्कारकृताभिव्यक्तेस्त्रेधा विकल्प्य निरासः भा. 77)

अपिच केयमभिव्यक्तिः, याऽनुभूतिरूपस्यात्मनोऽहङ्कारेण क्रियत इत्युच्यते ? न तावत् तत्सिद्धिः; [1]तस्य स्वतस्सिद्धत्वेनानन्याधीनसिद्धित्वाभ्युपगमात् । नापि तद्विषयज्ञानम्, ज्ञानान्तराननुभाव्यत्वात् । अनुभाव्यत्वे हि घटादिवदननुभूतित्वप्रसङ्गः । अत एव[2] न ज्ञानकरणानुग्रहः ।

(तत्र तृतीयविकल्पस्य त्रेधा विकल्प्यापि निरासः)

स[3] हि वेद्यगतज्ञानोदयप्रतिबन्धकापनयनेन वा, दीपेनेव सन्तमसनिरसनेन चक्षुषः; वेद्यसन्निकर्षोपाधित्वेन वा, व्यक्तिदर्पणादेरिव जाति-निजमुखादिबोधकस्य नयनादेः; वेत्तृ[4](बोद्धृ ?)(वेदितृ ?)गतकलङ्कक्षालनेन वा, शमदमादिनेव परावरात्म-

---

किञ्चेत्यादिना । प्रातिकूल्यतः विरुद्धत्वात् । अत्र यादृशं व्यञ्जकत्वं व्यङ्ग्यत्वञ्च विवक्षितम्, तादृशं मिथोविरुद्धम् । अन्योन्यव्यङ्क्तृव्यङ्ग्यत्वे सति यत्र परस्परव्यक्त्यधीनव्यक्तिकत्वप्रसक्तिः, तत्रान्योन्याश्रयदोषात् । तथाहि व्यञ्जकं हि व्यक्तिकारणं व्यक्तेः प्रागावश्यकम् । तत्र यद्यहङ्कारः स्वरूपसन्नेवानुभूतिव्यञ्जकः, तर्ह्यहमुल्लेखाभावात् तत्स्थतयाऽनुभूतिग्रहणमिष्टं न सिध्येत्; अहमर्थस्य यावत्सत्त्वं साक्षिद्धयेभास्यत्वसिद्धान्तभङ्गश्च । अतोऽहङ्कारो व्यक्तस्सन्ननुभूतिव्यञ्जको वाच्यः । तथाऽनुभूतिरप्यहङ्कारव्यक्तेः हेतुरव्यक्ता पूर्वं न स्थातुमर्हति, प्रकाशस्वभावत्वात् । नाप्यहङ्कारं विना व्यक्ता, तथासति तस्याहेतुत्वापत्तेः । अतो व्यक्त्योः परस्परपूर्वकत्वमिति । अतोऽनुभूतेर्व्यञ्जकत्वमात्रम्, अहङ्कारस्य व्यङ्ग्यत्वमात्रमिति प्रकृतप्रथमहेतोः प्रकृतविवक्षितव्यञ्जकत्वविरुद्धत्वात् प्रकृतसाध्यव्याप्यत्वमक्षतम् । द्वितीयानुमानमपि त्वन्मतानुसारेण प्रयुक्तं त्वया दुर्निषेधम्; एवमनिष्टस्यैवापादनादिति । यद्वा प्रथमकारिकायाम् अहङ्कारो न प्रकाशव्यञ्जकः अप्रकाशत्वात्, संविन्न जडव्यङ्ग्या प्रकाशत्वादिति सामान्यतो विवक्षितम् । पूर्वोक्तानुमानद्वयं तूत्तरकारिकायाम् । पूर्वव्याख्याने तमनुभवं तदधीनसिद्धिरिति वाक्यस्वारस्यम्; द्वितीये किञ्चेत्युत्तरत्रारम्भस्वारस्यम् ।

1. सिद्धिः उत्पत्तिः । 2. अत एव तद्विषयकज्ञानाभावादेव । 3. तद्विषयकज्ञानमस्ति न वेत्यस्त्वेतत्; करणानुग्रहोऽपि प्रकृते दुर्वच इत्याह सहीति । चक्षुष इत्यादौ अनुग्रह इति विभज्यानुषङ्गः। 4. मुख्यो गौणो वा ज्ञातृरूपार्थे वेत्तृशब्दश्शास्त्रदीपिकादावात्मवादे । अत्र तु वेदितृशब्द एव सर्वत्र । एतत्स्थलीय श्रीभाष्यानुसारे तु बोद्धृशब्दः ।

तत्त्वज्ञानोपायस्याऽऽगमादेः। न तावत् अनुभवगतमहङ्कारापनेयमस्ति किंचित् ज्ञानोदयपरिपन्थि। (1) अज्ञानं तु ज्ञानसमानाश्रयविषयतया न तदुभयभावविरहिणि भवदभिमतसाक्षिणि निक्षेपमर्हति। न खलु ज्ञानप्रसक्तिशून्यो घटादिरज्ञानीत्युच्यते। तथैव न जातुचित् ज्ञातृत्वं ज्ञानमात्रस्येति न तस्याप्यज्ञानं भवेत्। (2) भवदपि तत् अहङ्कारापनेयं नेष्यते, ज्ञानैकनिवर्त्यत्वादज्ञानस्य; तथाऽभ्युपगमाच्च। (3) ज्ञानश्च स्वविषय एवाज्ञानं निवर्तयति। न च तद्विषयत्वमात्मतयाऽभिमतस्यानुभवस्येष्यत इति तत्रत्यमज्ञानं न केनचित् कदाचिदुच्छिद्येत। (4) ज्ञानप्रागभावरूपश्चाज्ञानं न ज्ञानोत्पत्तिप्रतिबन्धकमिति शक्यं व्यपदेष्टुम्। भावरूपमज्ञानमनिर्वचनीयं जगदुपादानमित्यादि प्रलापमात्रमिति [1]संबन्धनिरूपणे प्रतिपादयिष्यते। अतो न वेद्यदोषापनयनरूपा अहङ्कारेणानुभवाभिव्यक्तिः॥

करणानामभूमित्वाच्च तत्संबन्धहेतुता।
अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते॥ १२॥

(व्यञ्जकस्य स्वनिष्ठतया व्यङ्ग्यप्रकाशनस्वभावविरहः (भा. भा. 79.)

न च स्वाश्रयतयाऽभिव्यङ्ग्यप्रकाशनमभिव्यञ्जयितुः स्वभावः; प्रदीपादौ अदर्शनात्। यथावस्थितवस्तुप्रकाशानुकूलस्वभावत्वाच्च ज्ञान-तत्साधन-तदनुग्राहकाणाम्। तच्च स्वतःप्रामाण्यन्यायात्; तदनभ्युपगमे च सर्वत्रानाश्वासप्रसङ्गात्॥ [1]व्यक्तेस्तु जातिराकार एवेति तथा प्रत्यायनम्; न व्यञ्जकत्वप्रयुक्तम्, उक्तादेव व्यभिचारात्। दर्पणादिस्तु नायनमहःप्रतिफलनलक्षणदोषहेतुर्नाभिव्यञ्जको वदनादेः। व्यञ्जकस्त्वालोकादिरेव। व्यञ्जकत्वेऽपि प्रतीपगमनदोषप्रयुक्तः तत्रान्यथाऽवभासः। न चेह तथाऽहमर्थस्य तादृशदोषापादकत्वं स्वभावः; तथासति सर्वस्यापि प्रत्यक्षादेरप्रामाण्यप्रसंगाच्च [2]किञ्चित् तथ्यं स्यात्॥

---

नन्वज्ञानमेवापनेयमस्त्वित्यत्राह अज्ञानमिति। **तदुभयभावविरहिणि**-ज्ञानाश्रयत्वज्ञानविषयत्वरहिते। **वेद्यगतज्ञानोदयप्रतिबन्धके**त्यनेनाज्ञानग्रहणे (1) तस्य वेद्यगतत्वं तद्वृत्तित्वरूपं तद्विषयकत्वरूपं वा नास्ति, (2) अज्ञानस्याहङ्कारापनेयत्वमपि नास्ति, (3) अनुभवगतस्य तस्योच्छेद्यत्वमपि त्वन्मते न भवति, (4) अज्ञानमभिमतं प्रागभावरूपं वा भावरूपं वा। आद्यं प्रतिबन्धकमपि न भवति। अन्त्यं तु त्वदिष्टमप्रसिद्धम्। (भावरूपाज्ञाने प्रत्यक्षानुमानादिप्रमणाभावप्रपञ्चनं श्रीभाष्यादौ द्रष्टव्यम्।) इत्येवं वेद्ये किञ्चित्कारमुखेनानुग्रहरूपं प्रथमशिरः खण्डितम्। अथ, वित्तिकरणे वेदितरि वा किञ्चित्कारमुखेनेति शिरोद्वयं शिष्टमर्धद्वयेन खण्डयिष्यति **करणानामि**ति। 1 **संबन्धनिरूपणे**-ग्रन्थोपक्रमदर्शितात्मसंबन्धविषयविप्रतिपत्तिविषयनिरूपणावसरे। **करणानामभूमित्वात्**=अनुभूतेरिन्द्रियासंबन्धित्वात्। **अहमर्थस्ये**ति काकाक्षिन्यायात् प्रागप्यन्वेति! **तेनैवे**ति। स्वस्वरूपस्यैव स्वकल्मषप्रतिभटत्वे कल्मषप्रसक्त्यभावादिति भावः। 2. **न किञ्चिदि**ति। अद्वैतज्ञानमप्यप्रमा स्यात्।

तस्मात्[3] ज्ञातृतया सिद्ध्यन् अहमर्थ एव प्रत्यगात्मा, न ज्ञप्तिमात्रम् ॥

(सौरेशवचोर्थदूषणम् —सुषुप्तावहमर्थस्यैव भानम् भ. 79)

यत्तु—सुषुप्तिमुक्त्योर्ज्ञप्तिमात्रतया स्फुरणम्; अहमिति तु न प्रतिभातीति—तत्र सुषुप्तौ तथावस्थितिः पुरस्तादेव निरस्ता। अहमित्येकरूपेणाऽऽप्रबोधात् तत्राप्यात्मनः स्फुरणात्। [1]यदिपरं परागर्थाननुभवात् तमोगुणाभिभवाच्च न विविच्य स्फुटं चकास्ति। भवदभिमतानुभूतिरपि तदानीं तथैव[2] हि प्रथत इति वाच्यम्। नाहमहं (नाहम् ?), नाप्यर्थान्तरम्, अपितु अनुभूतिमात्रमज्ञानसाक्षितयाऽवतिष्ठत इत्येवंविधं स्वापसमयभवमनुभवं न हि सुप्तोत्थितः कश्चित् परामृशन् उपलब्धचरः॥ 'एतावन्तं कालं न किञ्चिदहमवेदिषम्' इति परामर्शनादेव तथात्वं लभ्यत इति चेत्—कथमिव? न किञ्चिदिति निर्देशादिति चेत्—नन्वेवमनुभूतिप्रतिभासोपि प्रत्याख्यातस्स्यात्।

(उक्तपरामर्शस्य विपरीतसाधकत्वम् भा. भा. 80.)

अपिच सुषुप्तिसमयसिद्धमात्मानम् अहमिति परामृश्य, 'न किञ्चिदवेदिषम्' इति तस्य वेदने प्रतिषिध्यमाने तात्कालिकीं वित्तिसिद्धिम् अहमर्थस्य चासिद्धिमभिदधानोऽनुभवविरोधमपि न जानाति देवानांप्रियः। निर्विषया निराश्रया च वित्तिर्नास्तीत्युक्तमेव।

(अहमर्थप्रकाशबाधकपरामर्शान्तरनिर्वाहः भा. भा. 81.)

ननु मामप्यहं न ज्ञातवान् प्रसुप्त इत्यस्ति हि प्रबोधे प्रत्ययः॥ सत्यम्; स तु वर्णाश्रमादिविशिष्टतया प्रबोधसमयसंवेद्यमानं देहिनं मामित्यादाय स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानाहमर्थस्य तेन रूपेणाज्ञातत्वं प्रज्ञापयति, न पुनर्ज्ञस्वभा[3]वस्याहमर्थस्यापि; एवमेव खल्वयमनुभवः, 'अत्र सुप्तोऽहम् ईदृशश्चेत्येवं मामपि न ज्ञातवानहम्' इति॥

(परोक्तिशोधनेपि सुषुप्तावहमर्थसत्ताप्रकाशयोरवर्ज्यत्वम्)

अपिच आत्मा सुषुप्तावज्ञानसाक्षित्वेनाऽऽस्ते इति यौष्माकी स्थितिः।

---

3. तस्मादिति। अहमर्थस्याहङ्कारत्वे तत्र देह इव वास्तवज्ञातृत्वायोगस्य, छायापत्त्या संपर्केण वा ज्ञातृत्वाध्यासायोगस्य च पूर्वमिव, इदानीं व्यञ्जकत्वाधीनज्ञातृत्वाध्यासायोगस्य चोक्तत्वादित्यर्थः।

1. सुषुप्तिगतं वैलक्षण्यं दर्शयति **यदिपर**मिति। **यदिपर**मित्यव्ययं समुदितं 'परन्तु'पर्यायकल्पम्। अतोऽत्र तर्हीत्येवं वाक्यापेक्षा नास्ति। यदि विशेषो विमृश्यः, तर्हि वक्ष्यमाणं परमस्तीति **यदिपर**मित्यस्यार्थः। इयं प्राचीनप्रयोगसरणिर्न्यायसिद्धाञ्जनेऽपि जडद्रव्यपरिच्छेदे (५७), 'यदिपरं तन्निमित्तत्वमात्रं महतः' इति। 2. **तथैव** अस्फुटतयैव। 3. **ज्ञस्वभावस्य**-त्वदुक्तज्ञानस्याश्रयापेक्षत्वात्संमन्तव्यस्य, अतएव प्रभातुल्यप्रकाशाश्रयत्वात् स्वयंप्रकाशस्य। वक्ष्यति च, 'चैतन्यस्वभावतया स्वयञ्ज्योतिष्ट्वात्' इति। अतएव 'चैतन्यस्वभावता हि स्वयम्प्रकाशता' इति भाष्यं चैतन्यस्वभावत्वात्स्वयम्प्रकाशतेति [1]व्याख्यातम्।

---

1 अत्र विशेषो भाष्यार्थदर्पणे द्रष्टव्यः।

साक्षित्वञ्च साक्षाज्ज्ञातृत्वमित्युक्तम् । स चायं जानामीति प्रतिभासमानोऽस्मदर्थ एवेति कथमिव तदानीमहमर्थो न प्रथेत ? स्वस्मै स्वयंप्रकाशमानोऽहमित्येव हि प्रकाशत इति ॥

तद् सिद्धं स्वापादिदशास्वपि आत्मा प्रकाशमानः अहमित्येव प्रकाशत इति ॥

(मुक्तावहमर्थसमर्थनम् भा. भा. 81. 82.)

यत्तु—मुक्तावहमर्थो नोपावर्तत इति—तत्[1] वार्तम्, यतस्तथासति वैनाशिकदर्शन इवात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातस्स्यात् । नो [2]खल्वहमिति धर्ममात्रम्; येन तदपगमेऽप्यविद्यानिवृत्त्यामिवाऽऽत्मनः [3]स्वरूपेणावतिष्ठत इत्युच्यते (च्येत ?) । अहमित्येव हि तस्य स्वरूपम् । ज्ञानमपि हि तद्धर्मत्वेन तस्यैव प्रकाशते, 'ज्ञानं मे जातम्' इति । [4]का कथा पुनः अर्थान्तरस्यात्मत्वे ?

(मोक्षशास्त्रमुमुक्षुप्रवृत्तिबलतोपि मोक्षेऽहमर्थसत्त्वम् भा. भा. 82.)

अन्यच्च[5]— यः सांसारिकदुःखैर्दुःखित्वेनात्मानं तत्त्वतो भ्रान्त्या वा प्रत्येति, दुःख्यहमिति, सः, 'सर्वमिदमनिष्टजातं कथमहमपुनरुदयमपनुद्य अव्याकुलः(लं) स्वस्थो भूयासमिति संजातमुमुक्षुस्तत्साधने प्रवर्तते । स यदि, 'साधनानुष्ठानादहमेव न भविष्यामि' इत्यवगच्छति, अपगच्छेदसौ मोक्षकथाप्रसङ्गादपि । ततश्चासंभवदधिकारितया सर्व एव वेदान्तविषयः, सर्वाणि च मोक्षशास्त्राणि प्रामाण्यादेव प्रच्यवेरन् ॥ अहमुपलक्षितः प्रकाशोऽपवर्गेऽवस्थास्यत इति चेत्-किमतः? न हि मयि नष्टेऽपि कोऽपि प्रकाशः स्थास्यतीति कश्चित् प्रेक्षावान् प्रयस्यति ॥

(अहमर्थस्य युष्मदर्थत्वभङ्गः भा. भा. 67.)

एतेन[6] (एतेनै ?)तदपि परास्तम्, 'अस्मत्प्रत्यये योऽनिदमंशश्चिदेकरसः प्रकाशः,

---

प्रकाशमानं वेति । नन्वज्ञानसाक्षित्वम् 'अहमज्ञानं जानामी'त्येवंरूपं नेष्यते, किन्तु 'न जानामी' त्येवंरूपमिति चेत्-एवमपि जानामीत्युत्तमपुरुषेणास्मदर्थप्रकाशो दर्शित एवेति । 1. **वार्तम्** असारम् । **वैनाशिकदर्शने** क्षणिकज्ञानसंतत्युच्छेदो मोक्ष इति **बौद्ध**मते । 2. नन्वात्मन्यविद्याया इवाहमर्थस्याप्यध्यस्तत्वात् अध्यस्तनाशेप्यधिष्ठानभूतात्मस्थितिरपवर्गे निर्बाधेति शङ्कां क्षिपति **नो** इति । **धर्ममात्र**मिति । अविद्यापि नाध्यस्ता, किन्त्वात्मधर्मः । अहमर्थस्तु न धर्मोपि । अतो 'धर्मनाशेपि धर्मिस्थितिः' इति रीतिरपि न भवतीति । 3. **आत्मा स्वरूपेणे**ति वा, **आत्मनः स्वरूप**मिति वा, आत्मन इत्यस्याविद्यानिवृत्त्यामित्यत्रान्वयविवक्षया, **अविद्यानिवृत्त्यामिवात्मनः, आत्मा स्वरूपेणे**ति वा पाठः स्यात् । अन्यथा **आत्मे**त्यध्याहारः स्यात् । 4. **के**ति । ज्ञानस्यावस्थितिरेव तदाऽहमर्थनाशो न सिद्ध्यतीति स्थिते कुतस्तस्याहमर्थभिन्नस्यात्मत्वप्रसक्तिरिति । 5. "यद्यात्मधर्मोऽहङ्कारो नित्यत्वं तस्य बोधवत् । नित्यत्वे मोक्षशास्त्राणां वैयर्थ्यं प्राप्नुयाद्ध्रुवम् " इति सौरेशोक्तदोषस्तस्यैवेत्यभिसंधायाह **अन्यच्चे**ति । (प्राप्नुयात् —प्रसजेत् ।)

6. **एतेन** मुक्तावहमर्थानुवृत्तेरावश्यकत्वेन । **अस्मदि**त्यादि । अहमिति प्रतीताव-

स आत्मा । तस्मिंस्तद्दलनि[1]र्भासिततया लक्षणतो युष्मदर्थ एव अहं जानामीति सिध्यन्नर्थ' इति । [2]प्रत्यक्षविरोधात्—अहं जानामीति सिध्यंश्चेतनो युष्मदर्थ इति माता वन्ध्येतिवद् व्याहतार्थं वचः । न चासा[3]वन्याधीनावभासः; चैतन्यस्वभावतया स्वयंज्योतिष्ट्वात् । प्रकाशश्च प्रकाशत्वादेव कस्यचिद्भवेत् दीपादिप्रकाशवदिति नात्मा भवितुमर्हति । अतो ज्ञातृतयाऽहमिति सिध्यन्नर्थ एवात्मा ।

(मुक्तेऽप्यहन्त्वसाधकन्यायः)

स [4]च मुक्तावप्यात्मने अहमित्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात् । योयः स्वस्मै प्रकाशते, स सर्वोऽहमित्येव प्रकाशमानो दृष्टः; यथा तथ प्रकाशमानत्वेनोभयवादिसम्मतः संसार्यात्मा । यः पुनः अहमिति न चकास्ति, नासौ स्वस्मै प्रकाशते; यथा [5]घटादिः । स्वस्मै प्रकाशते चायं मुक्तात्मा । तस्मात् सः अहमित्येव प्रकाशते ।

(अहन्त्वप्रकाशस्योपाधिकृतत्वभङ्गः)

नचैवं[6] प्रकाशमानत्वे मुक्तस्याज्ञानित्वसंसारित्वादिप्रसङ्गः आपादनीयः, मुक्तत्वविरोधात्; अतदुपाधित्वाच्च तत्प्रत्ययस्य । न ह्यज्ञानोपाधिरहंप्रत्ययः, ब्रह्मात्मापरोक्षज्ञानक्षपितनिखिलशेषाविद्यानाम प वामदेवा[7]दीनामतत्प्र(महम्प्र ?)त्ययदर्शनात् । श्रूयते हि—"तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च", "अह[8]मेव च (मेकः

---

हङ्कारोऽनुभूतिश्चेति द्वयं भासते । तत्रानुभूतिश्चिद्रूपा स्वयंप्रकाशतया प्रत्यग्रूपोंशः पराग्रूपेदमंशादन्या ।
1. **तद्दलनिर्भासिततया** चिदधीनप्रकाशतया । **लक्षणतः** पराधीनप्रकाशत्वरूपपराग्लक्षणवत्तया । अहम्प्रतीतिगोचरत्वाहंशब्दार्थत्वयोः सत्त्वेऽपि सोऽर्थो लक्षणथो **युष्मदर्थ एव**-इदमंश एव, परागर्थ एवेति । **सिध्यन्**-ज्ञातृत्वेन सिध्यन् । अत्र अनुभूतिरात्मा प्रत्यक्त्वात्, अनुभूतिः प्रतीची स्वयम्प्रकाशत्वात्, अनुभूतिः स्वयम्प्रकाशा चित्त्वादिति व्यतिरेकिहेतुत्रयम्, अहमर्थो नात्मा पराक्त्वात्, अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात्, अहमर्थो ज्ञानाधीप्रकाशः चिद्भिन्नत्वादित्यन्वयिहेतुत्रयञ्चाभिसंहितमिति **श्रुतप्रकाशिकादौ** । 2. उत्तरेणैकवाक्यमिदम् । यद्वा यथाभाष्यमत्र वाक्यच्छेदः । 3. **असौ** अहमर्थः । **स्वयंज्योतिष्ट्वात्**—स्वयंप्रकाशत्वात् । ननु प्रकाशतदाश्रययोस्स्वप्रकाशत्वे उभयोः प्रत्यक्त्वापत्तिः ॥ नैवम्, अहन्त्वस्यैव प्रत्यक्त्वरूपतया केवलप्रकाशे तदप्रसक्तेरिति । 4. अन्वयिव्यतिरेकिपञ्चावयवन्यायेन मुक्तावहन्त्वानुवृत्तिकथनमुखेनाहन्त्वरूपप्रत्यक्त्वस्य स्वरूपं विवृणोति **सचे**ति । स्वस्मै प्रकाशमानत्वं प्रत्यक्त्वम्, पराक्त्वञ्च परस्मै भासमानत्वमिति शिक्षितं भवति । 5. आदिना ज्ञानस्यापि परिग्रहः। 6. **एवं प्रकाशमानत्वे**-अहमिति प्रकाशमानत्वे । 3. **वामदेव**शब्दोऽत्र महर्षिं महादेवञ्चाभिप्रेत्य । **आदिशब्देन** वा रुद्रग्रहणम् । ४७-९ **अतत्प्रत्ययदर्शनादित्यशुद्धम्** । तत्प्रत्ययदर्शनादिति वा पाठस्स्यात् । 4 .ऋषिमध्ये वामदेवानुसन्धानं बृहदारण्यकवाक्येन प्रदर्श्य, देवमध्ये सर्वज्ञस्य वामदेवस्य महादेवस्यानुसन्धानमप्यथर्वशिरोवाक्येन

प्रथममासम् ?) वर्तामि [च] भविष्यामि" इत्यादि । तथा कथंचिदप्यविद्यादिक्लेशैर्लेशतोपि जातुचिदपरामृष्टस्य परमपुरुषस्यापि अहमित्यात्मपरामर्शः प्रज्ञायते, 'हन्ताहमिमास्तिस्रो देवताः', 'बहु स्यां प्रजायेय', 'स ईक्षत लोकान्नु सृजै' इति, तथा 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥', 'तेषामहं समुद्धर्ता', 'अहं बीजप्रदः पिता', 'वेदाहं समतीतानि' इत्येवमादिभिः ॥

(अनात्मगोचराहङ्कारशब्दस्यान्यथानिर्वाहः)

एवञ्च[1] साक्षादहमर्थादात्मनो विलक्षणेऽपि देहे येन आव्यक्तिकपरिणामभेदेनाहमिति भ्रमः, तदभिप्रायोऽहंकारस्य क्षेत्रान्तर्भावोपदेशो भगवतः, 'महाभूतान्यहङ्कारः' इति । बहुमन्तव्यजनावधीरणहेतुश्चासौ गर्वापरपर्यायस्तत्तत्र शास्त्रेषु प्रायशो हेयतयोपदिश्यते ।

(आत्मनोऽहमर्थत्व एवाविद्यानिर्वाहसंभवः)

तस्मादहमितिमतिर्बाधकापेता साक्षादात्मगोचरैव ; अनात्मनि तु शरीरे भवन्ती अविद्येति युक्तम् । उक्तञ्च, "श्रूयताञ्चाप्य(तच्छ्रूयताम्?)विद्यायाः स्वरूपं कुलनन्दन । अनात्मन्यात्मबुद्धिर्या" इति महर्षिणा वासिष्ठनन्दनेन । न च ज्ञप्तिमात्रप्रतिभासः कस्यचिच्छरीरेऽस्ति, येन तन्मात्रात्मवादिनोऽप्यनात्मबुद्धिरुपपद्येत ॥

[2]अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।

---

भविष्यामीति इति । अत्र तत्त्वटीकायाम्, 'अथर्वशिरसोऽप्येवमेव निर्वाहो वेदार्थसंग्रहे स्थापित' इति वाक्यम्, अहमेवेत्यादेरथर्वशिरोवाक्यत्वस्य तत्र भगवद्भाष्यकृत्संमतेश्च सूचनायेति ज्ञायते । अविद्येति । अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः (यो. सू.) । 'महाभूतान्यहङ्कार इत्येतत् क्षेत्रमुच्यते' (२-४३) इति सौरेशकटाक्षेणाह एवञ्चेति । आत्मन एवाहन्त्वे स्वतएव सर्वदाऽहमिति भासमानत्वे च सतीत्यर्थः । अहङ्कारशब्दे भावे करणे च घञ् । कृञर्थश्च प्रकृते ज्ञानक्रिया । तथाच अहंबुद्धिस्तत्करणञ्च तदर्थः । तत्राऽऽत्मन्यहम्बुद्धिस्तात्त्विकी । तदभिप्रायेण क्वचित्प्रयोगः । यथा, 'अथातोऽहङ्कारादेशः' इति । अनहमर्थे अहमिति बुद्धिरप्यहङ्कारः । अयमेव देहादावात्मभ्रम इत्युच्यते । अयं सर्वप्राणिसाधारणः । अयमेव यदा प्रशस्तदेहादिविषयकात्मभ्रमरूपो भवति, तदा गर्व इत्युच्यते । आत्मगुणादिभिरुत्कृष्टस्य जनस्य यत् देहादि, ततः स्वदेहादौ प्राशस्त्यमभिमत्य देहात्मभ्रमवशादात्मानमेव तादृशप्राशस्त्यविशिष्टतया गृह्णन् हि परात्मनस्तदभावमाकलय्य तमवधीरयतीति । 'अहङ्कारं बलं दर्पम्' इत्यादौ बलदर्पादिसाहचर्यात् अयमेव गुणविशेषो हेयत्वेनोपदिष्ट इति ज्ञायते । आत्मन्यहम्बुद्धेस्स्वतसिद्धत्वान्न तत्र करणापेक्षा । करणेघञन्तस्त्वहङ्कारशब्दः अनहमर्थे देहादावहम्बुद्धिकरणे क्षेत्रज्ञार्थचतुर्विंशतिक्षेत्रतत्त्वान्तर्गते अहङ्कारतत्त्वे प्रवर्तत इति तस्य क्षेत्रान्तर्भावोपपत्तिरिति । 2. अद्वैतिमतदूषणं निगमयति अत इति । अत्र संविदनित्यत्वसाश्रयत्वादि निरूप्य, बौद्धमत इवैतन्मतेपि प्रत्यभिज्ञानुपपत्तिं प्रस्तुत्य, 'अहं जानामीति प्रत्यक्षं न ज्ञप्तौ ज्ञातृत्वभ्रमरूपम् ; नाप्यन्तःकरणे वस्तुतो भ्रान्त्या वा ज्ञातृत्वसंभवः,

**अविद्यायोगतश्चाऽऽत्मा ज्ञाताऽहमिति भासते ॥ १४ ॥**

(संविदात्मत्वसाधकाजडत्वहेतुभङ्गः)

**[1]यदुक्तमजडत्वात् वित्तिरेवात्मेति, तत्रेदं वाच्यम्-किमिदमजडत्वं नामेति । यद्युच्येत, सदपि यन्न प्रकाशते, तत् जडम् ; तद्विपरीतमव्यभिचरितप्रकाश[2]सत्ताकमजडमिति-तथासति सुखादिभिर्व्यभिचारी हेतुः । [3]न खलु सुखदुःखेच्छादयो विद्यमाना अपि कदाचिदनवभासमाना भवन्ति । स्वसत्ताप्रयुक्तप्रकाशत्वमपि दीपादिभिरनैकान्तिकम् ; ज्ञानव्यतिरिक्तप्रकाशानङ्गीकाराच्चासिद्धता, विरुद्धता च ॥ यदि मतम्, अव्यभिचरितप्रकाशोऽपि सुखादिरन्यस्मै प्रकाशत इति घट इव जडतां नातिवर्तते ; तेनानात्मेति—ज्ञानं वा किं स्वस्मै प्रकाशते ? अन्यस्यैव हि तदपि जानतोऽहमर्थस्य प्रथते, अहं जानामीति, अहं सुखीतिवत् । तेन स्वस्मै प्रकाशमानत्वमभिप्रेत्य प्रयुज्यमानोऽजडत्वहेतुरसिद्धः संविदि । अतः सत्तयैव स्वमात्मानं प्रति सिद्ध्यन् अजडोऽहमर्थ एवात्मा । तत्संबन्धायत्ता तु ज्ञानस्यापि प्रकाशता । अत एव हि स्वाश्रयचेतनं प्रति प्रकटता, इतरं प्रति अप्रकटता च ज्ञानस्य, सुखदुःखादेरिव । न चैवम् आत्मान्तरसंबन्धमर्थान्तरं वाऽपेक्ष्य अयमात्माऽऽत्मने प्रकाशते । इतच्चानन्तरमेवोपपादयिष्यते ॥**

---

अतो ज्ञाताऽहमर्थ एवात्मा, न ज्ञप्तिमात्रम्' इति वर्णनेन आत्मनि ज्ञातृत्वाहन्त्वयोः प्रत्यक्षसिद्धिर्दर्शिता । **अथ** सुषुप्तौ मुक्तौ चाहमर्थस्फुरणोपपादने प्रवृत्य, अन्यथा वैनाशिकमताविशेषः, मोक्षशास्त्रमुमुक्षुप्रवृत्तिवैयर्थ्यञ्चेति तर्कमुक्त्वा, आत्मनि स्वस्मै भासमनत्वेन सर्वदाऽहमिति भानं साधयतः पञ्चावयवन्यायस्य कथनादहम्भाने न्यायोऽप्युक्तः । एवमहम्भाने वामदेवादिविषय आगमोऽप्युक्तः । ज्ञातृत्वविषये तु आगम उपरिष्टाद्वक्ष्यते । **अविद्यायोगो** नाम अविद्याया अनात्मनि देहादावात्मभ्रान्ते**र्योगः** उपपत्तिः । यद्वा तस्या **अयोगो**ऽनुपपत्तिः ; आत्मनि वस्तुतोऽहन्त्वसत्त्व एव स्थूलोहमित्यहम्भ्रमस्यात्मभ्रमत्वोपपत्तिः ; तत्र वस्तुतस्तदसत्त्वे च तस्य तद्भ्रमत्वायोग इति । अयमनन्तरमेवोक्त इति ।

1. एवं विशिष्य प्रच्छन्नबाह्यमतं निरस्य प्रकटप्रच्छन्नसाधारण्येन प्रथममनूदिते संविदात्मवादे शिष्टं खण्डनं वर्तयिष्यन् तद्वादारम्भोक्तमजडत्वहेतुमाभासीकरणायानुवदति **यदुक्त**मिति । 2. अव्यभिचरितः प्रकाशो यस्याः सा सत्ता **अव्यभिचरितप्रकाशा** । अत्र स्वसत्ताव्यापकप्रकाशवत्त्वं, स्वसत्ताप्रयुक्तप्रकाशवत्त्वं, स्वस्मैभासमानत्वमिति पक्षत्रये मध्यमपक्षः प्रथमपक्षत्वेन भाष्ये आदृतः, औचित्यविशेषात् । 3. संवित् आत्मा स्वसत्ताप्रयुक्तप्रकाशवत्त्वादित्यत्र, स्वमते अहमर्थे आत्मत्वसद्भावात् साध्यतदभावसाधारणतया हेतुरनैकान्तिकः स्वमतरीत्या । परेण संविदतिरिक्तस्य सर्वस्यानात्मत्वस्वीकारात् हेतुः साध्याभावैकसमानाधिकरण इति तद्रीत्या विरुद्धत्वम् । तेन प्रकाशरूपधर्मास्वीकारात् प्रकाशवत्त्वरूपहेतोरसिद्धिश्चेति ।

(अभेदसाधकाभिमते सहोपलम्भनियमे अशेषहेत्वाभासवचनम्)

**न [1]च ज्ञानेन सहोपलम्भनियमोऽहमर्थस्यार्थान्तरतां वारयति, ज्ञानस्यापि तथात्वप्रसङ्गात्। तदपि हि तेन[2] नियतेन सहोपलम्भमिति अहमर्थादनर्थान्तरं मिथ्यारूपमेवाऽऽपद्येत[3]। असिद्ध[4]श्च संविद्विशेषैस्सहोपलम्भनियमः, प्रत्येकं व्यभिचारदर्शनात्। न च विशेष[5]मात्रं (?) निर्धूत निखिलविषयविशेषोपश्लेषं वा वित्तिमात्रमस्ति, येन सहोपलम्भनियमः संवेदितुरभिधीयेत। [6]सामान्यं तु सदपि सौगतैर्न वस्तुतयाऽऽस्थीयते॥ समस्त[7]वृत्तिप्रत्यस्तमयेऽपि स्वयञ्ज्योतिः अयमात्माऽवतिष्ठत इति च वक्ष्यामः।**

---

1. अथ संविदात्मवादोक्तस्य प्राकट्याभावादेः स्वसंमतत्वात् तदुपर्युक्तमेव विमृश्यन्, 'संविद एवात्मत्वे लाघवात् किमन्येन कल्पितेन' इति तदुक्तविषये समाधानरूपं, 'कल्पनायां ह्येष दोषः, प्रत्यक्षसिद्धत्वादन्यो दुरपलपः' इत्यर्थपरं नन्वित्यादिग्रन्थं दूषयितुं तेनोपन्यस्तं यत् सहोपलम्भनियमादि, तत् खण्डयति **न चे**ति। 2. **तेन** अहमर्थेन। सह उपलम्भो यस्य तदिति बहुव्रीहिः। **नियमेन सहोपलभ्य**मिति वा **नियतसहोपलम्भ**मिति वा पाठः स्वरसः। ३. अभेदं साधयतश्च संविदि अहमर्थस्य कल्पितत्वसाधन एव तात्पर्यम्। नीलतद्धियौ, अहमर्थतत्संविदौ वा अभिन्ने परस्परोपलम्भनियतोपलम्भकत्वादिति प्रयोगे मिथ्यात्वरूपपर्यवसितसाध्यस्य पक्षैकदेशे बाधादिकमत्र विवक्षितम्; अहमर्थो ज्ञानाभिन्नः स्वोपलम्भव्यापकसंविदुपलम्भकत्वादिति प्रयोगे च यत् स्वोपलम्भव्यापकयदुपलम्भकं तत् तदभिन्नमिति सामान्यमुखव्याप्तिविवक्षायां, संविदि स्वोपलम्भव्यापकाहमर्थोपलम्भकत्वरूपहेतुसत्त्वात् साध्याभावाच्च तद्दृष्टान्तेनात्रापि साध्याभावसाधनसंभवाद्धेतोर्विरुद्धता, तत्रैव व्यभिचारश्चेति ज्ञापितम्। अत्र सहत्वघटितहेतुनिर्देशस्तु सहत्वस्य भेदाधिष्ठानत्वात् स्वभिन्नाहमर्थोपलम्भव्यापकोपलम्भगोचरसंवित्कत्वादिति ग्राह्यः। स्वं संवित्। एतदनुसारेण सामान्यमुखव्याप्तिवचनप्रकारोऽप्यूह्यः। 4. घटपटाद्येकैकसंविदुपलम्भेपि चालिनीन्यायेनाहमर्थोपलम्भव्यापकत्वरूपविशेषणाभावात् साधनाप्रसिद्धिरिति। 5. अत्र विशेषातिरिक्तमित्येतदर्थपरः पाठस्स्यात्। प्रत्यक्षादिवित्तिविशेषमादाय व्यापकत्वाभावेपि वित्तिमात्रमादाय व्यापकत्वं भवतीति न, निर्विशेषं न सामान्यमिति न्यायेन विशेषातिरिक्तसामान्याभावात्। एवं घटसंविदित्येवं विषयवैशिष्ट्यं विसृज्य निर्विषयवित्तिमात्रग्रहणमपि दुष्करम्, तादृशवस्त्वभावादिति। 6. ननु सविषयव्यक्त्यतिरिक्तवित्त्यभावेपि प्रकृते तादृशव्यक्तीनामेव संवित्त्वेन रूपेण सामान्यतो ग्रहणेन व्यापकत्वघटनान्न दोष इत्यत्राह **सामान्य**मिति। अतद्व्यावृत्त्यात्मकापोहातिरिक्तभावरूप जातिः सौगतासंमता। अतद्व्यावृत्तिश्च व्यक्त्यनतिरिक्तेति। 7. प्रकारान्तरेण साधनाप्रसिद्धिमाह **समस्ते**ति। सुषुप्तिप्रलयादावहमर्थप्रकाशोस्ति, न संवित्प्रकाश इति न व्यापकत्वमिति भावः॥

अभिन्नं सहोपलभ्यत्वादिति साध्यहेतुनिर्देशः एकं द्वाविति निर्देश एव, सहेति द्वयोरुक्तेः। तथाच

**स्ववाग्विघातश्च—एकं द्वाविति निर्देशात् । द्वयोर्ह्येकक्रियानुप्रवेशे सहशब्दः; शिष्येण सहाऽऽगच्छत्याचार्य इति यथा ॥ अपिच नीलतद्धियोरिति द्वे उपादाय, अभेद इत्येकत्वविधिः सवित्रीवन्ध्यात्वविधिरिव । [1]अनेकान्तश्च संविदि प्रतिपाद्यमानैर्जडत्वादिभिः, सर्वज्ञज्ञानेन सहोपलम्भनियमभागिभिः संसारिज्ञानैश्च[2] । तेषामभेदाभ्युपगमे ज्ञानस्य जडत्वमूर्तत्वादि, बुद्धस्य बद्धत्वमित्यापद्येत ।**

(एकज्ञानमात्रविषयत्वरूपसहोपलम्भनियमदूषणम्)

**नियमेनैकज्ञानसिद्धत्व[3]मप्युक्तप्रकारेण प्रत्युक्तम् ॥ [4]विपक्षव्यतिरेकश्चासिद्धः । भवतु नियमेनैकज्ञानसिद्धत्वं ज्ञानज्ञेयज्ञातॄणाम्, मा च भूदभेदः; को विरोधः ?**

---

पूर्वोक्तसहत्वघटितहेतावयं वाग्विघात इत्याह **स्ववागिति** । **अपि चेति** । सहोपलम्भनियमादभेदो नीलतद्धियोरिति तत्कारिकातः नीलतद्धियौ अभिन्ने इति प्रतिज्ञानिर्देशः प्रतीयते । तत्र पक्षतावच्छेदक हेत्वोर्द्वित्वैकत्वयोर्विरोधात् प्रतिज्ञाविरोधोपीत्यर्थः । 1. जडत्वमूर्तत्वादिकं हि सौगतैरपि संविदि नेष्टम् । तत्र जडत्वादेरपि संवित्प्रकाश्यतया संवित्सहोपलम्भनियमसत्त्वात् तत्र संविदभेदरूपसाध्याभावाद्व्यभिचारः । अभेदस्वीकारे च तस्याः जडत्वाद्यापत्तिः। ननु जडे व्यभिचार इति वक्तव्यम्, न तु जडत्वे इति; तथा हि सति संविदो जडत्वत्वापत्तिरेव स्यात्-सत्यम्-सौगतमते धर्मधर्म्यभेदादेवमुक्तम् । ननु जडे व्यभिचार इति वा कथं सुवचम्, नीलादेर्जडस्य पक्षत्वात् ॥ सत्यम् । जडत्वादेस्संविदि बौद्धैः प्रतिषिद्धत्वाज्जडस्य पक्षत्वे बाधस्स्यादिति नीलत्वादिना पक्षता, न तु जडत्वेनेत्युक्तौ जडत्वेन जडेपि हेतुसत्त्वाद्व्यभिचार इति तात्पर्यम् । 2. **सर्वज्ञस्य** सुगतस्य ज्ञानं हि संसारिज्ञानविषयकम् । तथाच तस्य ततो भेदे व्यभिचारः, अभेदे बुद्धस्य बद्धत्वापत्तिरिति । ननु संसारिज्ञानोपलम्भव्यापकत्वं सर्वज्ञज्ञानोपलम्भस्य कथम्, जीवेपि व्याप्यस्य सत्त्वादिति चेत्-उच्यते, संविद्विशेषैर्नियतसहोपलम्भाभावस्योक्तत्वात् तदर्थं संवित्त्वसामान्येन व्यापकत्वविवक्षया पक्षे स्वविषयकसंविदभेदसाधनेऽयं दोषः । यद्वा व्यापकत्वं नियमश्चेत् पूर्वदोषः, व्याप्यत्वरूपश्चेत्, अयं दोष इति । 3. अयं हेतुस्सहत्वाघटित इति पूर्वोक्तकिञ्चिद्दोषपरिहारः । एवं पूर्वं सहोपलम्भे विषयोपलम्भस्य संविदुपलम्भस्य चैकत्वनिर्बन्धो नासीत् । विषयोपलम्भव्यापकत्वं संविदुपलम्भे तदभिन्ने भिन्ने वा यथायथमिति विवक्षितम् । अत्रोभयोरेकज्ञान सिद्धत्वमुच्यते । तच्च स्वप्रकाशकज्ञानमात्रप्रकाश्यसंवित्कत्वं वा संवित्प्रकाशकज्ञानमात्रप्रकाश्यत्वं वा । आद्यं नीलादावसिद्धम्, संविदो नीलाप्रकाशकपीतज्ञानप्रकाश्यत्वात् ॥ घटसंविद्व्यक्तेः घटज्ञानमात्रप्रकाश्यत्वमस्तीति चेत्, जडगोचरसंविद्व्यक्तेर्जडज्ञानमात्रप्रकाश्यत्वस्य, सर्वज्ञसंविद्व्यक्तेस्संसारिज्ञानज्ञानमात्रप्रकाश्यत्वस्य सत्त्वादुक्तदोषः । 4. द्वितीयसाधारण्येनाप्रयोजकत्वमाह **विपक्षेति** । हेतोर्विपक्षेऽभावो न निश्चितः, अभेदरूपसाध्यं मास्तु, संवित्प्रकाशकमात्रप्रकाश्यत्वमस्त्विति शङ्कासत्त्वादिति । तदुपपादयति **भवत्विति** । संविदं विना अप्रकाश्यत्वं जडत्वप्रयुक्तम्, नाभेदप्रयुक्तमिति ।

किमप्रकाशरूपत्वात् प्रकाशमनुरु[1]ध्यते ।
व्यवहाराय नीलादिराहोस्वित् तदभेदतः ॥ १५ ॥
इति सन्दिह्यमानत्वान्नाभेदः शक्यनिर्णयः ।
बोध्यस्यैव नियमो न पुनर्बुद्धि बोद्धृगः ॥ १६ ॥

स्पष्टश्च प्रत्यक्षबाधः, सर्वज्ञानेषु वेद्यादिव वित्तेरपि वेदितुर्भेदस्यापरोक्षत्वात् । न च प्रतियोगिनः [2]प्रत्यक्षत्वं दृश्यत्वं वा भेदस्याऽऽपरोक्ष्ये त्वपेक्षितव्यम्, सिद्धि[3]मात्रेण तदुपपत्तौ अप्रयोजकत्वेन तद्विशेषस्यानाक्षेपात् (?) । अ[4]नवभासमानेऽपि प्रतियोगिनि भावाः स्वरूपत एव विलक्षणाः प्रत्यक्ष्यन्त इति सर्वलोकसाक्षिकमेतत् ॥

(ज्वालादृष्टान्तेनाबाधितत्वशङ्का)

ननु जीवतो भेदप्रत्यक्षस्य शिरसि [5]पदनिधानेन सहोपलम्भनियमस्याभेदेन प्रतिबन्धग्रहणमिति कथमिव ततस्तद्बाधसंभवः ? तथासति हि [6]ज्वालाभेदानुमानमपि तदेकत्वप्रत्यभिज्ञयाऽपोद्येत ॥

(ज्वालादृष्टान्तवैषम्यवचनम्)

अविशेषज्ञो देवानांप्रियः । तत्र हि क्लृप्तकारणदोषानुवृत्तौ सत्यां जायमानोऽपरोक्षावभासः न निरवद्यप्रत्यक्षपूर्वकमनुमानं बाधितुमर्हति । तथा हि— अचिरनिर्वापितारोपितेषु एकवर्तिभागवर्तिषु बहुषु दीपेषु तद्भेदादर्शिनः[7] सुसदृशतया, स एवायमिति स्मृतिरुपजायत इति दृष्टम् । अतोऽन्यत्राप्यप्रतिबन्धपुष्कलकारणक्रमोपनिपातादवयवविश्लेषाच्च

---

1. दिवादिगोऽयं रुधधातुः 'अनो रुध काम' इत्यनूपसृष्टः कामार्थकः । कर्तरि तिङ् । अत्र अनुरुणद्धीत्यपेक्षया एतत्प्रयोगो युक्ततरः । भवत्विति हेत्वङ्गीकारोपि ज्ञातरि नेत्याह बोध्येति । ज्ञानानुरोधनियमो नीलादौ वेद्यमात्ररूपे जडे स्यात्, न बोद्धरि, तस्य स्वप्रकाशत्वात् । अतोऽहमर्थस्संविदभिन्नस्तदेकप्रकाश्यत्वादित्यत्र स्वरूपासिद्धिरिति । 2. **प्रत्यक्षत्वं** प्रत्यक्षरूपज्ञानत्वम् । भेदप्रत्यक्षे प्रतियोगिप्रत्यक्षमेव तन्त्रम् । तत्र वित्तेस्स्वप्रकाशतया प्रत्यक्षान्तरानपेक्षा प्रत्यक्षवित्तावेव, तत्स्वप्रकाशस्य प्रत्यक्षरूपत्वात् । अनुमित्यादिस्वप्रकाशस्य त्वनुमित्यादिरूपतया प्रत्यक्षान्तरविषयतयैव तन्त्रत्वमिति शङ्कितुराशयः । 3. **सिद्धिमात्रेण** सामान्यतः प्रतियोगिप्रकाशेन । 4. **अनवेति** । गोत्वेन गोज्ञानमप्यश्वरूपप्रतियोग्यभानेऽप्यश्वभेदज्ञानरूपमेव । प्रतियोगिभाने तु सुतराम् । एतावता, 'भेदज्ञानसिद्धवत्कारः कथम्' इति तेन कृता शङ्का परिहृता । 5. प्रत्यक्षस्यापि तृणीकारेण सहोपलम्भनियमे अभेदनिरूपितव्याप्तिग्रहणमित्यर्थः। 6. ज्वालाभेदानुमानम् इयं ज्वाला पूर्वक्षणवर्तिज्वालातो भिन्ना तत्सामग्रीभिन्नसामग्रीजन्यत्वादिति । 7. **तद्भेदादर्शिनः** निर्वापणारोपणाद्यदर्शिनः । **पुष्कलेति** । वर्त्यवयवः तैलांशश्च ज्वालाकारणम् । तत्र पूर्वक्षणदीपादुत्तरक्षणदीपो भिन्नः पूर्ववर्त्यंशभिन्नवर्त्यंशे तदंशस्पृष्टतैलबलादुत्पद्यमानत्वात् ।

सुसदृशनिरन्तरप्रवृत्तप्रदीपप्रवाहाऽऽलम्बनैव तथामतिरिति निश्चीयते । तथैक[1] [त्वि ?] नानात्वप्रत्ययः स्वतःप्राप्तेन्द्रियवृत्तिविपर्ययप्रयुक्तः समसमयोपजायमानानेकानवद्यप्रत्यक्ष[2]-प्रतिक्षिप्तविषयश्च द्विचन्द्रादौ दृष्ट इति नासौ तत्रैकत्वानुमानमभिभवितुं प्रभवति ॥ न चैवमिह[3] ज्ञातृज्ञानज्ञेयविवेकसाक्षात्कारी प्रत्यय इति प्रतिरुणद्धयेवायमिहाभेदानुमानोदय-प्रसक्तिम् । न च उपलब्धि[4]साहित्यनियमादेव तथात्वमत्रानुमेयमिति युक्तम्, विपक्षे बाधकानुपलब्धेः । संविदधीनसिद्धितयापि तथानियमोपपत्तेः । [5]अनैन्द्रियकत्वेन च तद्वृत्तिविपर्ययस्याकिञ्चित्करत्वात् । योग्या[6]नुपलम्भपराकृतत्वाच्च बाधकप्रत्ययस्य । [7]अपिच विषयसिद्धिर्हि संवित् । सा च स्वयंप्रकाशेत्यविवादः । तेनावर्जनीयस्तथा नियमः । न च भेदो[8]पि सिद्धिमन्तरेण सिध्येदित्यनुन्मत्तेन युक्तमापादयितुम्—इत्यलमनेनानुभवपराहत-मतातिश्याकुलीकरणेन ॥ (प्रकाशातिरिक्तवस्त्वसंभवखण्डनम्)

अप्रकाशात्मनश्च नीलादेः प्रकाश इति [9]अनुभवसिद्धत्वान्न समर्थनान्तरं प्रार्थयते ॥ [10]आत्मा तु प्रकाशस्वभाव एव । न च तावता ज्ञानत्वम्, स्वतन्त्रत्वात् । परतन्त्रमागन्तु यावदर्थेन्द्रियसन्निकर्षादिकारणसन्निधानमवतिष्ठमानमर्थावच्छिन्नरूपं ज्ञानमिति प्रागेवावोचाम । आत्मा तु स्वतन्त्रो ज्ञाता अहमिति प्रत्यात्मं प्रथते । यदि पुनरीदृशोऽप्ययम् अनन्या-

---

अन्यथा आरोपणसमन्तरं शिष्टवर्ति तैलापनयनेऽपि ज्वालानुवृत्त्यापत्तेः । अवयवविश्लेषः— प्रदीपावयवविशरणम् । 1. एकस्मिन्निति युक्तम् । एकत्वानात्वेत्यत्र एकमिति पदच्छेदे आलम्ब्येति पदमावश्यकम् । **वृत्ति विपर्ययेति** । इन्द्रियप्रसरणे अङ्गुल्यवष्टम्भादिकृतान्यथाभावेत्यर्थः । 2. अन्यपुरुषीयाणि प्रत्यक्षाणि अनवद्यानि । 3. घटमहंजानामीति मिथोभेदग्राहिप्रत्यक्षम् **एवं** कारणदोषजन्यं नेत्यर्थः । 4. सहोपलम्भनियमादभेदसाधनार्थात् **तथात्वं** कारणदोषजन्यत्वमपीति न ; **विपक्षे** कारणदोषजन्यत्वरूप प्रकृतसाध्यविपरीतपक्षे बाधकाभावात् । अप्रयोजको हेतुरिति भावः । 5 नन्वत्रापि द्विचन्द्रादाविवेन्द्रियप्रसरणविपर्यास एव मूलमित्यत्राह **अनैन्द्रियकेति** । इन्द्रियग्राह्यविषये हि तद्वृत्तिविपर्यासस्य भ्रमहेतुता, न तु तदयोग्याहमर्थादिविषये इति । 6. कारणदोषनिश्चयाभावेपि बाधकप्रत्ययात् भ्रमत्वनिश्चयोऽस्तु इत्यत्राह **योग्येति** । 7. संविदधीनसिद्धित्वेपि संविदुपलम्भनियमः कुत इत्यत्राह **अपि चेति** । 8. संविदधीनसिद्धित्वमेव कथमित्यत्राह **न चेति** । **भेदोपि**—संवित्प्रयोगिकभेदरूपत्वेन संप्रत्युच्यमानो घटादिरपि । ज्ञातृज्ञेयग्रहणमेव भेदग्रहणमिति हि प्रागुक्तम् । 'न च भेदोपि सिद्धिमन्तरेण' इत्यत्र, 'नचाभेदोपि सिद्धिमन्तरेण' इति वा पाठस्स्यात् । 9. **प्रकाश इतीति** । इतीदमित्यर्थः । इदं प्रार्थनाकर्तृ । अतः प्रकाशाप्रकाशयोर्विरोधः प्रागुक्तोऽयुक्तः, कालभेदेनाविरोधात् । प्र. पञ्चिकायां प्रमाणपारायणे, 'अप्रकाशात्मकस्यैव प्रकाशव्यतिरिक्तस्य प्रकाश इति प्रकाशादेव सिद्धम्' इति वाक्यम् । 10. प्रकाशस्वाभाव्ये च संवेदनत्वमित्युक्तं निरस्यति **आत्मेति** ।

धीनसिद्धितया ज्ञानमभिलप्यते, अभिलप्यतां कामम् । तथापि[1] ज्ञानवदेवेदं ज्ञानम्, न ज्ञप्तिमात्रतया (त्रं तथा) । (ज्ञानातिरिक्तात्मनि श्रुतिप्रमाणोपन्यासः)

अत[2] एव हि च्छन्दोगाः, 'अथ यो वेदेदं जिघ्राणीति, स आत्मा' इत्याद्यामनन्ति । तथा, कतम आत्मेति प्रश्नपूर्वकमिदमेव लक्षणमामनन्ति वाजसनेयिनः, 'योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति । अत्र हि, 'योऽयं सर्वलोकानुभवसिद्धो विविधविषयवेदनप्रचुरः प्राणेषु प्रेरकतया स्थितो हृदयायतने अन्तर्ज्योतिरहमिति प्रत्यक्त्वेन प्रकाशते, स पुरुषः' इति यथोदितमेवात्मस्वरूपमुपदिश्यते । 'एष[3] हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इत्याथर्वणाः । तथा, 'विज्ञातारमरे केन विजानीयात्' इति, 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्', 'स उत्तमः पुरुषः........नोपजनं स्मरन्निदं शरीरम्', 'एवमेवास्य परिद्रष्टुरिमाष्षोडश[4] कलाः पुरुषायनाः पुरुषं प्राप्यास्तं गच्छन्ति', 'तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः' इत्याद्याः ॥

[5]सत्यं ज्ञानमित्यत्रापि ब्रह्मलक्षणनिर्देशे ज्ञानशब्दो न ज्ञानमात्रवचनः, अपितु तद्वद्वचनः । तद्वचनत्वे 'ञ्निति' (पा. ६-१-१९७) इति [6]आद्युदात्तत्वप्रसक्तेः । अन्तोदात्तश्चायं ज्ञानशब्दः । मत्वर्थीयाच्प्रत्ययान्तत्वे तथात्वं घटते, नान्यथेत्येतत् परमात्मनिरूपणे अतिनिपुणमुपपादयिष्यामः ॥ ऐतरेयोपनिषदपि 'प्रज्ञानं ब्रह्म' इत्युक्त्वा, एतेन प्राज्ञेनात्मनेति प्रकृष्टज्ञानवन्तमेवेश्वरं दर्शयति ॥

तत् सिद्धं ज्ञातैवायमात्मेति ॥

---

1. **तथापि** अभिलापेऽपि लोकप्रसिद्धसकर्मकसकर्तृकज्ञानरूपत्वाभावात् तद्गतमनन्याधीनप्रकाशत्वरूपं धर्ममादाय गौणोऽयं निर्देशः असिंहे माणवके सिंहवद्भावात् सिंह इतिवदिति भावः । न ज्ञप्तिमात्रमित्येतावदेव पाठस्स्यात् । तथेत्यधिकम् । 2. एवं सौगतोक्तं निरस्य तदनुसारिप्रच्छन्नमतनिरासायात्मनो ज्ञातृत्वे श्रुतीरपि दर्शयति **अत एवे**ति । **विज्ञानमयः** तद्गुणप्रचुरः । **अन्तर्ज्योतिः** स्वप्रकाशः । अत्र अयं हृदीति हृदयावच्छेदेनोपलम्भो दर्श्यते । अत एव सिद्धो नासादिगप्राणभेदः प्राणेष्विति तत्पृथक्कारेण ज्ञाप्यते । 3. **हि** यतः **द्रष्टा**....दर्शनादिरूपप्रकाशधर्मकः, अत एव **विज्ञानात्मा** प्रकाशस्वरूपोऽपि प्रकाशधर्मकः प्रदीपवदिति । 4. प्रश्नोपनिषदि सप्राणमसृजतेत्यादिना प्राणश्रद्धापञ्चभूतेन्द्रियमनोन्नवीर्यतपोमन्त्रकर्मलोकनामाख्याः षोडश कलाः (६-४) उक्ताः ; पाञ्चभौतिकदेहेन्द्रियाणि वा कलाः । **पुरुषायनाः** पुरुषाधीनस्वरूपस्थितिप्रवृत्तिकाः । **पुरुषं** परमात्मानम् ।

5. जीवात्मनीव परमात्मन्यपि ज्ञातृत्वस्वभावे श्रुतिं दर्शयति **सत्य**मिति । 6. तेन सूत्रेण तादृशप्रत्ययात्पूर्वस्योदात्तविधानादिति भावः । **परमात्मनिरूपण** इति । विप्रतिपत्तिषट्कप्रदर्शितरीत्या इदमपि आत्मसिद्धिग्रन्थानुप्रविष्टम् ।

( अथानन्यसाधनत्वप्रकरणम् )

**किं पुनरस्मिन् देहादिव्यतिरेकिणि चेतने प्रत्यगात्मनि प्रमाणम् ?**

**अनुमानमिति नयविचक्षणोऽक्षपादः यदाह—"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानि आत्मनो लिङ्गमिति' (१-१-१०) इति ।**

(अक्षपादमताऽऽक्षेपः)

**किममीषामात्मना अविनाभावो दृष्टः, धूमध्वजविशेषेणेव धूमविशेषस्य ? हन्तैवं तत एव तत्प्रमितेः किमनुमानेन ?**

(तार्किकेणाऽऽशयाविष्करणम् )

**मा भूत् विशेषतोदर्शनम् ; सामान्यतस्तु भविष्यति । तथाहि—इच्छादयः कार्यत्वानित्यत्वगुणत्वादिभिः शब्दादय इव आश्रिततयाऽनुमीयन्ते । यश्चैषामाश्रयः स आत्मा । गुणत्वञ्च परिशेषात्—न सामान्यविशेषसमवायाभावाः, अनित्यत्वात् ; न द्रव्यं कर्म वा, व्यापकद्रव्यसमवायादिति । विशेषगुणत्वं चानित्यत्वे सति अस्मदाद्येकेन्द्रियग्राह्यत्वनियमात् रूपादिवत् ॥** (सामान्यतोदृष्टानुमानात् विशेषसिद्धिप्रकारः)

**एवमाश्रयमात्रमुपस्थापयन्तोऽन्वयव्यतिरेकिणो हेतवः द्रव्यान्तरगुणत्वं प्रत्याचक्षाणैः केवलव्यतिरेकिसाधनैरात्मगोचरतया नियम्यन्ते । तथा हि भवति—इच्छादयो न महाभूतगुणाः स्वात्मन एव प्रत्यक्षत्वात् अबाह्येन्द्रियग्राह्यत्वाद्वा । ये भूतगुणास्ते स्वात्मपरात्मप्रत्यक्षाः बाह्यकरणप्रत्यक्षाश्च ; यथा रूपादयः ; न तथेच्छादय इति न तद्गुणाः । दिक्कालमनांसि पुनः न विशेषगुणवन्ति ; नापि तद्गुणानां प्रत्यक्षत्वमिति न तेषामपि**

---

एवं देहेन्द्रियमनःप्राणधीभ्योऽन्य इति विवेचितम् । अथानन्यसाधनत्वं विव्रियते । अनन्यत् स्वं साधनं ज्ञापकं यस्येत्यनन्यसाधनः । तत्रानुमानादेस्साधनत्ववादिनां मतं विमृश्यते । विप्रतिपत्त्यवसरदर्शितक्रमेण गौतमकापिलादितार्किक-श्रोत्रिय-कौमारिल-प्राभाकरमतानि उपन्यस्य सिद्धान्तं वक्ष्यति । धूमादाविवेच्छादौ व्याप्तिग्रहणाभावादनुमानमपि नेति शङ्कते **कि**मिति । धूमो ध्वजो यस्य सोग्निः **धूमध्वजः** । उदर्याग्नेर्धूमादननुमानात् , जलसिक्ताङ्गारजन्यधूमादेरन्यसाधकत्वाच्चोभयत्र विशेषपदम् । **ततः** दर्शनात् । विशेषतो दृष्टं सामान्यतो दृष्टमिति द्विविधेऽनुमाने अग्निधूमवत् विशेषतोदृष्टाभावेपि वायुस्पर्शवत् सामान्यतोदृष्टमनुमानं संभवतीति तार्किकःपृच्छति **माभू**दिति । इच्छादेर्गुणत्वमसिद्धमिति तत्साधकं परिशेषानुमानमाह **न सामान्येत्ये**त्यादिना । **अनित्यत्वा**दिति । अत एव न गगनादिद्रव्यमपि । **न द्रव्य**मिति । अवयवः परमाणुः अवयवि चान्यत् परिच्छिन्नमेव । कर्म च तन्मात्रे । **व्यापकसमवायात्** विभुसमवेतत्वात् । विभुत्वञ्चेच्छाद्याश्रयस्य, सर्वदेशावच्छेदेन शब्दोत्पत्त्या गगनस्येव, सर्वतो जन्मलाभादिकार्येण सिद्धम् । इच्छादयो न दिक्कालमनोगुणाः विशेषगुणत्वात् प्रत्यक्षत्वाच्चेति ।

गुणाः । अकारणगुणपूर्वत्वात् अयावच्छरीरभावित्वादित्यादयः शरीरविशेषगुणत्वप्रतिषेधहेतवः प्राचीनाश्चात्रानुकष्टव्याः । [1]तेनेच्छादयो न शरीर [ादि] गुणाः, तद्गुणभावापवादकप्रमाणवत्त्वे सति गुणत्वात् । ये यथोक्तसाध्या न भवन्ति, ते यथोक्तसाधना अपि न भवन्ति, यथा रूपादयः । यथोक्तसाधना पुनरिच्छादय इति यथोक्तसाध्या एवेति । विमतिपदास्पदेभ्यः शरीरादिभ्योऽर्थान्तरगुणा इच्छादय इति वा प्रतिज्ञा । यथोक्त एव हेतुः, उदाहरणञ्च[2] प्रयोक्तव्यम् । सामान्येन वान्वयः प्रदर्शनीयः-यो यद्गुणभावापवादकप्रमाणवत्त्वे सति गुणः, स ततोऽर्थान्तरस्य गुणः, यथा पृथिव्यादिभ्यः[3] शब्द इति आकाशसिद्धिवदात्मसिद्धिरिति— (एतत्तार्किकाशयखण्डनम्)

[4]इदमपि न समीचीनमित्येके । तथाहि-अन्वयव्यतिरेकिहेतुभिर्देहादिसाधारणमाश्रयमात्रमवगमितम् । न च तावताऽऽत्मसिद्धिः ।

(केवलव्यतिरेकिणो हेत्वाभासत्वम्)

केवलव्यतिरेकी तु साधनदशामेव नासादयति, सपक्षान्वयविरहात्, असाधारणवात् । न चैवं केवलान्वयिनो विपक्षव्यतिरेकदर्शनविकलतया [5]साधारणवत् असाधनत्वम् ; देश-

1. एवं तत्तदवृत्तित्वे प्रत्येकहेतुमुक्त्वा अनुगतमेकं विशिष्टप्रयोगमाह **तेने**ति । 2. यथोक्तमित्यनुषज्यते । पूर्वोक्तरीत्या व्यतिरेक्युदाहरणघटितव्याप्तिप्रदर्शनं कार्यमित्यर्थः । 3. **पृथिव्यादिभ्य** इत्यतः परम् **अर्थान्तरस्य गुण** इत्यनुषङ्गपूर्वकमर्थो वक्तव्यः ।

4. एवं तार्किकाशयमनूदितं दूषयति **इद**मिति । इच्छादयः किञ्चिदाश्रिताः गुणत्वादिति प्रथमानुमानम् । इच्छादीनां शरीराद्यसमवेतत्वसाधकानि अन्यानि अनुमानानि । इच्छादयः शरीराद्यतिरिक्तसमवेता इत्यन्तिमानुमानम् । तत्र प्रथमानुमानेनाऽऽत्मनि साधनीये मध्यानुमानानि सहायभूतानि, अन्तिमानुमानं च प्रथमवत् आत्मसाधकम् । तत्र नाद्यः, साध्यघटककिञ्चित्पदेनात्मरूपविशेषालाभात् । सहायभूतानुमानहेतवस्तु केवलव्यतिरेकित्वादहेतवः । अत एव नान्त्यपक्षोऽपीतित्यर्थः । 5. **साधारणे**ति अनैकान्तिको हेत्वाभासः त्रिविधः साधारणासाधारणानुपसंहारिभेदात् । अतः असाधारणोऽपि हेत्वाभासः । शब्दो नित्यः शब्दत्वादित्यसाधारणहेतुर्हि सपक्षवृत्तित्वरूपाङ्गवैकल्यादसाधक इष्टः । हेतोः पञ्च रूपाण्यपेक्षितानि, पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वमबाधितत्वमसत्प्रतिपक्षितत्वञ्चेति । पक्षे सत्त्वं हेतोः पक्षसत्त्वम् ; एवमुपरि । ३ यथा धूमवान् वह्नेरिति साधारणहेतुः विपक्षे सत्त्वात् तदसत्त्वरूपतृतीयरूपाभावादसाधनम्, तद्वत् केवलान्वय्यप्यस्तु । वह्न्यादौ विपक्षः प्रसिद्धः ; तत्र हेतोरसत्त्वं नास्ति ; केवलान्वयिनि विपक्ष एवाप्रसिद्धः ; एवं मिथोविशेषे सत्यपि विपक्षासत्त्वस्य दुरुपपादत्वमुभयत्र तुल्यमिति शङ्का । **देशे**ति । न हि साधारणस्थल इव व्यभिचारनिश्चयोऽस्ति । तदभावात् केवलान्वयिनि न विपक्षसत्त्वनिश्चयप्रयुक्तं तद्रूपवैकल्यम् ; किन्तु विपक्षाप्रसिद्धिप्रयुक्तम् । विपक्षप्रसिद्धिस्थल

कालादिशंकितोपाधिविगमेऽप्यन्वयदर्शनेन साध्यान्वितस्वभावतया परिनिश्चितत्वात्। एवं केवलान्वयिनो हेतुत्वसंभवेऽपि केवलव्यतिरेकिणस्तत् अयुक्तम्। न च[1] साधनाभावे साध्याभावदर्शनमात्रेण साध्यान्वितस्वभावत्वं शक्यं निश्चेतुम्; अभावस्यानन्तदेशव्यापितयाऽनवयवेन ग्रहणस्यैव दुष्करत्वात्। कलयाऽप्यन्यत्र वृत्तौ[2] संबन्धे नियमासंभवात्। सन्देहग्रस्तत्वाच्च—किं साधनाभावप्रयुक्तः साध्याभावः, किं वा निमित्तान्तरप्रयुक्त इति॥

[3]पृथिव्यादिभ्योऽर्थान्तरगुणत्वप्रतिज्ञाऽपि द्रव्यान्तराप्रसिद्धेरप्रसिद्धविशेषणा॥

(साङ्ख्योक्तजीवानुमानसरणिदूषणम्)

एतेन साङ्ख्योदीरितसाधनभेदा अप्यपोदिता वेदितव्याः संघातपरार्थत्वादयः। तथाच तानेव तावत् आदितो [4]व्याकुर्महे— (सांख्याशयाऽऽविष्कारः)

"संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥" (सां. का)

अयमर्थः—देहेन्द्रियादयः परार्थाः संघातत्वात् शयनासन[5]शरणादिवत्। प्रत्यक्षश्च शरीरस्य संघातत्वम्, भूतानाञ्च। अव्यक्तमहदहंकारेन्द्रियाणाञ्च सुखदुःखमोहात्मतया तथात्वमनुमेयं [6]तद्वदेव॥ न च इन्द्रियाणामाहंकारिकत्वस्याभ्युपेतस्य, साध्यत्वाभिमतपारार्थ्यधर्मस्य चासंहतपरार्थत्वस्यान्यथात्वापादनादुभयविशेषविरुद्धत्वं हेतोः; अहंकारान्वयव्य-

---

एव तत्र सत्त्वं शङ्क्येतेति तत्रैवासत्त्वज्ञानमपेक्षितम्। अप्रसिद्धिस्थले तु न तदपेक्षा; प्रसक्तौ सत्यामेव प्रतिषेध प्रवृत्तेः। यद्युच्येत—अप्रसिद्धिनिश्चय एव दुर्लभः, देशान्तरे वा कालान्तरे वा हेतोस्सोपाधिकत्वशङ्कया व्यभिचारशङ्कासत्त्वादिति—तर्ह्यनुमानान्तर इवानुकूलतर्केणोपाधिशङ्काविगमः संपाद्यते। एवं शङ्कितोपाधिविगमे सति यत्रकचित्साध्यसाहचर्यदर्शनत एव साध्यव्याप्तिपरिनिश्चयश्चान्वयव्यतिरेकिण्यपि क्लृप्तः; तथैव केवलान्वयिन्यपि। सर्वोपाधिविगमेप्यन्वयो हि न व्याप्तिं विनेति। **विगमेपीति**। अत्र **अपीति** न स्यादिति मन्यते। ननु सपक्षसत्त्वमप्यन्वयव्याप्तिग्रहोपयोगित्वान्न प्रकृतेऽपेक्षितमित्यत्र व्यतिरेकव्याप्तेर्दुर्ग्रहत्वमाह **नचेति**। १. साधनाभावे सति क्वचित्साध्याभावदर्शनमात्रेणेत्यर्थः। अन्वये हेतोः साध्यव्याप्यत्वम्; व्यतिरेके तु साध्याभावस्यैव हेत्वभावव्याप्यत्वम्। अथापि न्यायभाष्ये समव्याप्तत्वाभिप्रायेण साध्याभावव्याप्यत्वं हेत्वभावे उक्तम्। अत्र यथार्हं ग्राह्यम्। **अनवयवेन** कृत्स्नतः। **दुष्करत्वा**दिति। अनुकूलतर्कश्च व्यतिरेकव्याप्तौ दुर्वच इति भावः। २ हेतौ साध्यसंबन्धः सामानाधिकरण्यरूपः। **निमित्तान्तरे**ति। अत एवोक्तम्, "अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः। तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा" इति। ३. अन्तिमानुमानेऽन्वयिनि दोषोऽयमेव। प्रतिज्ञायां पक्षांशे विशेषणं साध्यम्; तच्च **पृथिव्याद्यर्थान्तरगुणत्वम्**। पृथिव्यादिभिन्नवस्तुसमवेतगुणत्वमिति यावत्। तत् अप्रसिद्धमित्यर्थः। ४. पश्चात् तन्निरासमुगमत्वायेति शेषः। ५ **शरणं** गृहम्। ६. **तद्वदेव** शरीरादिवदेव। **असंहतपरार्थत्वस्ये**ति। **असंहतः**—असंघातरूपो यः परः तदर्थत्वस्येत्यर्थः।

तिरेकानुविधानेन, [1]'देवा वैकारिकाः स्मृताः' इत्याद्यागमबलेन, प्रकाशलाघवगुणान्वयेन च वैकारिकाभिधानसात्त्विकाहंकारभेदयोनित्वस्येन्द्रियाणां प्रमाणसिद्धस्यापवादानुपपत्तेः। [2]आत्मनस्तु संघातत्वे तस्यापि संघातान्तरार्थतयाऽनवस्थापत्त्या निष्प्रमाणकानेककल्पनाप्रसंगात्। अप्रयोजकत्वाच्च संघातत्वस्य शेषित्वे। दृष्टान्तदृष्टाशेषधर्मोपस्थापनेऽनुमानप्रामाण्यस्यैवासंभवापत्तेस्तदसंघातत्वस्य [3]चाप्रचाल्यत्वात्। न च प्रमाणान्तरबलेनाऽनाहंकारिकत्वसंघातान्तरार्थत्वयोर्बाधे अबाधितेन [4]संघातपरार्थत्वेनापि न भवितव्यम्। एवच संहत[5]त्वव्यापकावरुद्धत्रैगुण्यादिरहितोऽसंहत आत्मा सिद्धः।

[6]तथा देहादयः सुखदुःखमोहात्मकतया परेणाधिष्ठीयन्ते, यन्त्रादिभिरिव रथादयः। [7]अपिचानुकूलप्रतिकूलवेदनीये सुखदुःखे भृत्यभ्रातृव्यवत् अनुकूलनीयप्रतिकूलनीयवती। दृश्यत्वात्[8] देहादयो घटादय इव विलक्षणद्रष्टृका इति।

---

१. विरुद्धहेत्वाभासे विशेषविरुद्ध इति कश्चित्प्रभेदः। स च धर्मिविशेषविरुद्धो धर्मविशेषविरुद्ध उभयविशेषविरुद्ध इति त्रेधा। धर्मी पक्षः। धर्मस्साध्यम्। तत्रतत्र सिद्धान्त्यभिमत आकारो विशेषः। तद्विपरीतसाधकत्वं विशेषविरुद्धत्वम्। अत्र च शयनादिदृष्टान्तेनेन्द्रियेषु परार्थत्वसाधकः संघातत्वहेतुः तद्दृष्टान्तेनैव तेषुनाहङ्कारिकत्वं साधयतु। तथा प्रकृतानुमाने परार्थत्वरूपसाध्यघटकस्य परस्य असंघातरूपत्वमेव सिद्धान्त्यभिमतम्; प्रकृतहेतुस्तु प्रकृतदृष्टान्तेनासंहतपरार्थत्वविपरीतं संहतपरार्थत्वं साधयत्विति हि शङ्का द्वयमत्र। तत्रेन्द्रियाणामनाहङ्कारिकत्वसाधनमनुभवागमबाधितमित्याह प्रथमम्। इन्द्रियोत्पत्तेः प्राक् अहंकारोऽस्ति। अहंकारव्यतिरेके इन्द्रियं नास्ति इति तदन्वयव्यतिरेकानुसरणम्। **देवाः** इन्द्रियाणि। **अहंकारभेदे**ति। वैकारिकस्तैजसश्च भूतादिश्चेति क्रमेण सात्त्विकराजसतामसाहंकाराणां नामानि। तत्र सात्त्विकाहङ्कारजत्वे युक्तिः **प्रकाशे**ति। 'सत्त्वं लघु प्रकाशकम्' इति ह्युच्यते। २. धर्मविशेषविपरीतसाधनमप्यप्रयोजकत्वेनानिष्टप्रसक्त्या च दुष्टमित्याह **आत्मनश्चे**ति। **शेषित्व** इति। शेषित्वं प्रति अप्रयोजकत्वादित्यन्वयः। ३. **तदसंघातत्वस्य चे**ति **चकारः** क्वचिन्न। अस्ति चेत्, **असंभवापत्ते**रित्यत्रान्वेति; इन्द्रियाहङ्कारिकत्वसमुच्चयार्थो वा। ४. संघातत्वहेतुना संघातस्य पारार्थ्यं साध्यमानमबाधितं देहादौ भवत्येवेति। ५. संहतत्वरूपं यत् व्यापकं तदवरुद्धं तद्व्याप्यं यत् त्रैगुण्यं तदभाववान् सिध्यति, संहतत्वरूपव्यापकाभाववत्त्वादिति। एवं **त्रिगुणादिविपर्यया**दिति व्याख्यातम्। ६. **अधिष्ठाना**दित्येतत् विवृणोति। **यन्त्रादिभि**रिति। यन्ता आदिर्येषां ते, तैः। **यन्ता**-सारथिः। ७. **भोक्तृभावा**दित्येतत् व्याख्याति **अपिचे**ति। सुखमनुकूलनीयवत् अनुकूलतया वेदनीयत्वात भृत्यवदित्येवमनुमानम्। दृष्टान्ते अनुकूलनीयेति देहस्य ग्रहणम्; पक्षे पुंसः। **भ्रातृव्यो** रिपुः। ८. **भोक्तृभावा**दित्यस्य सांख्यग्रन्थस्था द्रष्टृत्वादित्यपरा व्याख्या; तदनुसारेणाह **दृश्यत्वा**दिति।

कारिकागत-अधिष्ठानादिहेतुत्रयस्य त्रैगुण्यादिरहितात्मसाधनपर्यवसानं पूर्ववत् अनवस्थापरिहारायेत्याह

अधिष्ठातुरनुकूलप्रतिकूलवेदकस्य द्रष्टुस्त्रैगुण्यादिविपर्ययः पूर्ववदेव निर्णेतव्यः । तथा देहादेरव्यक्तान्तस्य कृत्स्नस्य त्रिगुणात्मकतया अत्यन्तदुःखोपशमनलक्षणमोक्षदशानुपपत्तेस्तदर्थञ्च शास्त्राणां महाधियाञ्च प्रवृत्तेरस्ति देहादिव्यतिरिक्तोऽसंहतस्त्रैगुण्याद्यसंस्पृष्टः पुरुष इति।

( साङ्ख्यानुमानदूषणम् )

अत्रापि संघातपारार्थ्यादिभिर्यद्यपि परः कोऽप्यधिष्ठाता द्रष्टा सिद्धः, तथापि न तस्यासंहतत्वात्रिगुणत्वादिरभिमतविशेषः शक्यनिश्चयः । तथाहि-संघातस्य संघातान्तरार्थत्वनियमदर्शनबलादापतन्ती परापरा[1] संघातकल्पना न दोषाय, कार्यतयेवानादिकारणपरम्परापरिकल्पना । [2]नचाप्रयोजकत्वमपि, असंघातस्यासंगस्याशेषविक्रियाशून्यस्यानाधेयातिशयकूटस्थचितिमात्रवपुषः पुरुषस्य संघातं प्रति परत्वानुपपत्तेः । तद्धि तस्य शेषि भवति, तच्च तदर्थम्; यत् येनोपक्रियते क्रियते वा, यच्चोपकरोति करोति वा । न च तथा सांख्यपुरुष इति कथं तस्य संघातं प्रति परत्वम्? कथंतराञ्च संघातस्य तादर्थ्यम्? अनुपकार्योऽप्युपकार्यतया आत्मानं मन्यत इति चेत्—कामं मन्यताम्; किमायातमुपकार्यत्वस्य? न खलु बाला[3]स्तलमलिनतादिमत्तया गगनमभिमन्यन्त इति तस्य तथात्वं भवति ।

( शेषित्वारोपस्याप्ययोगः )

अपिच तथाविधभ्रमोऽपि कस्य कथमुदयत इति विवेचनीयम् । न तावत् चितिशक्तेः; सर्वविक्रियाशून्यतयाऽतिविशुद्धायामशुभशतनिदानभूतभ्रमपरिणामासंभवात् । अन्तःकरणं तु बुध्यपरपरिभाषाभिधानमचेतनतया तनुरिव न भ्राम्यति ॥ अचेदपि स्वच्छतया चितिच्छायामापन्नं चेतनायत इति चेत्-न, नीरूपायाः चितेर्बुद्धेश्चच्छा (चिच्छा) यातद्ग्रहणानुपपत्तेः ॥ छायेव च्छायेति चेत्-कः खल्विवार्थः? चितिसरूपत्वमिति चेत्, हन्तैवमशेषविकाररहितचितिसरूपतापत्तौ अन्तःकरणमपि प्रत्यस्तमितसमस्तवृत्तिकमापद्यत इति दुरुपपादतरोऽयं भ्रमसुखदुःखादिविकारयोगः प्रत्यात्मसिद्धः ॥ चेतनत्वेन सरूपत्वमिति चेन्न — चितिरेव हि ते पुरुषः; न चेतयिता । यथाऽऽह तत्रभवान् पतञ्जलिः, "यदा चितिरेव पुरुषः किमत्र केन व्यपदिश्यत" इति ॥ अजडायमानत्वमिवार्थ इति चेत्, अजडत्वमपि न ज्ञातृत्वा-

---

अधिष्ठातुरिति । कैवल्यार्थं प्रवृत्तेरिति हेतुं व्याचष्टे तथेति । १. परापरेति । अन्यान्येत्यर्थः; उपर्युपरीति यावत् । २. धर्मविशेषविरुद्धतां पूर्वोक्तां स्थापयति नचेति । उपक्रियत इति आरादुपकारकप्रयाजाद्यभिप्रायेण । तत्र यस्येति शेषः । क्रियत इति स्वरूपनिष्पादकसन्निपत्योपकारकावहननपुरोडाशाद्यभिप्रायेण । अत्र यदिति कर्म अध्याहार्यम् । ३. तलम् -तलमन्तः(धः)प्रदेशः कार्योपयुक्तः, मूर्तरूपं वा । तथा ह्युपरि नभो दृश्यते । 'तलमध्यस्यन्ति, अवाङ्मुखीभूतमहेन्द्रनीलमणिमयमहाकटाहकल्पमित्यर्थः इति भामती । अतः तलत्वाध्यासः, मलिनत्वाध्यासश्च पृथक्पृथक् ।

तिरिक्तं किञ्चिदित्युक्तमेव ; तेनैव[1] तद्विवरणमिति च न किंचिदेतत् ॥ अपिच चितिसंनिधानाधीनां बुद्धिसिद्धिमभिदधानः कथमिव तदजडिमानं प्रति[2]जानीयात् ? न [3]च चितिस्वान्तयोर्बिम्बप्रतिबिम्बाधाराभिमतयोरन्यतरस्मिन्नप्यविद्यमानस्य विषयविशेषोपरक्तज्ञातृत्वलक्षणधर्मभेदस्य प्रतिबिम्बे संभवः । प्रत्युक्तश्चायं प्रतिबिम्बवादः प्रच्छन्नबाह्यमतप्रत्यादेशे[4] । ( वृत्त्यारोपसंभवशङ्कापरिहारः )

[5]यदुच्यते-निर्विकारायापि पुंसे तत्संनिधिमहिमसमुत्थापितप्रमाणविपर्ययादिविचित्रवृत्तिभेदं स्वान्तमेव स्ववृत्तिं विषयविशेषांश्चोपदर्शयति, सामन्तचक्रमिव पराक्र[6]मीयः प्रतिबलविलोलनादिवृत्तीः स्वामिने। ततः साक्षी भोक्ता चापदिश्यते, राजेति (राजेव?) विक्रमी विजयी चेति—तदनुपपन्नम्-द्रष्टृ हि दर्शनीयं दृश्यते (दर्श्यते?)। न च दृशिमात्रात्मवादिनां सांख्यानां तदुपजीविनाश्च प्रच्छन्नानां द्रष्टृत्वं वास्तवमस्ति । न च काल्पनिकेन शेषित्वसंभवः। कल्पनापि न संभवतीत्युक्तमेव। राजा तु सामान्यतो विशेषतो वा तेषु कर्मसु अमात्यान् नियुञ्जानः तत्फलमैश्वर्यादि चाश्नुवानः स्वस्वामिभावहेतुक्रयप्रतिग्रहजननादिव्यापारयोगी न निष्क्रियस्यानाधेयातिशयस्य पुंसो निदर्शनमिति यत्किञ्चिदेतत्[7] ॥ स्थूलोऽहं, गच्छाम्यहमित्यादिप्रत्यक्षमुदितविषयतया प्रसिद्धैवातीतकालता व्यतिरेका[8]नुमानभेदानाम्

इति आनुमानिकीमप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियास्संगिरन्ते ।

---

१. **तेनैवेति** । कथं चेतनायत इत्यत्र अजडायमानतयेति हेतुनिर्देशे यदेवोपपाद्यं तदेवोपपादकमिति दोष इति । २. 'संप्रतिभ्यामनाध्याने' (१-३-४६) इत्याध्याने परस्मैपदम् । आध्यानमुत्कण्ठापूर्वकस्मरणम् । परायत्तप्रकाशेऽन्तःकरणे कथं स्वप्रकाशत्वरूपमजडत्वं सोत्कण्ठं स्मरेदित्यर्थः । ३. चितिर्बिम्बः, स्वान्तं प्रतिबिम्बाधारः । न तत्र कुत्रापि भ्रान्तिमत्त्वम्, किन्तु चित्प्रतिबिम्बे इत्याशङ्क्याह **न चेति** । ४. **प्रत्यादेशे** इति पूर्वम् **अचाक्षुषस्वच्छायाऽदर्शना**दित्युक्तत्वात् । यदि **नीरूपायाश्चिते**रितीहानन्तरोक्तवाक्य इव तत्रापि किञ्चिदेवोक्तमित्यपरितोषः, तदा **न्यायतत्त्वा**दिगतभाग इह विवक्षितोऽस्तु । ५. ननु ज्ञातृत्वमिति न चैतन्यवत्त्वं विवक्षितम् ; किन्तु वृत्तिरूपज्ञानवत्त्वम् । वृत्तिश्चान्तःकरणे वस्तुतोऽस्तीति आत्मनि तदारोपः शक्यवचन इत्याशयेनाह **यदुच्यत** इति । ६. **पराक्रमीय** इति । पराक्रमवत्तरमित्यर्थः । पराक्रमवच्छब्दात् ईयसुन्प्रत्यये द्वयोरेकस्यातिशयार्थे परे, 'विन्मतोर्लुक्' (पा ५-३-६५) इति मतुपो लुक् । **पातञ्जलयोगभाष्ये** (१-१८) "यथा जयः पराजयो वा योद्धृषु" इति । ७. **यत्किञ्चिदेतदि**ति । न च पुंसो द्रष्टृत्वाभावेप्यन्तःकरणकर्तृकशेषित्वारोपविषयत्वमेव बद्धत्वमिति वाच्यम्, विषयत्वस्यापि तुल्यनयान्निर्विकारेऽयोगात्, मुक्तस्यापि भ्रान्तकर्तृकतादृशारोपविषयत्वे बद्धत्वापत्तेश्च । ८. **व्यतीत्यादि** । त्रैगुण्यादिविपर्ययसाधकानाम् असंहतत्वाधिष्ठातृत्वभोक्तृत्वरूपाणामनुमानविशेषाणाम् । तेषां व्यतिरेकव्याप्तेरिष्टतया व्यतिरेक्यनुमानत्वमपि । प्रसिद्धेत्यनेन केवलव्यतिरेकिणोऽननुमानत्वमप्यस्फुटं दूषणमस्तीति सूच्यते ।

(आत्मनि श्रुति-श्रुतार्थापत्त्योः प्रदर्शनम्)

**श्रुतयो हि साक्षादेवात्मनः शरीरादिव्यतिरेकमादर्शयन्ति-'स एष नेति नेति', 'अकायमव्रणमस्नाविरं शुद्धमपापविद्धम्', 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्ये', 'न जायते म्रियते वा कदाचित्', 'जीवापेतं वाव किलेदं म्रियते', 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्याद्याः । कालान्तरभाविस्वर्गादिसाधनविधयश्चाऽऽक्षिपन्ति देहादिव्यतिरिक्तं नित्यं चेतनमिति श्रुतितदनुपपत्तिप्रमाणकोऽयं प्रत्यगात्मेति ॥** (मीमांसकेनाऽऽत्मनः प्रत्यक्षत्वोपक्षेपः)

[1]**ननु हिताहितप्राप्तिपरिहारमात्रपरस्याम्नायस्य शिरसि किमिति महानयं भारः प्रक्षिप्यते । अनुमानागमाद्यशेषप्रमाणमूलभूतेन प्रत्यक्षेणैव ह्येनं प्रतिपद्यामहे । 'ममेदं शरीरम्' 'इदमहं जानामि' इति घटादिदृश्येभ्य इवायं द्रष्टा देहादपि पृथग्भूतः प्रत्यक्षं परिस्फुरति ।**

(तत्खण्डनम्)

**मैवं[2] वोचः । इन्द्रियार्थसन्निकर्षजं हि विज्ञानं प्रत्यक्षम् । न चेन्द्रियाणि रूपादिव्यतिरेकिणि निरतिशयसूक्ष्मे प्रतीचि, परागर्थ इव, सन्निकर्षेण ज्ञानं जनयितुमर्हन्ति । यथाऽऽम्नायते, 'पराञ्चि खानि व्यतृणत्[3] स्वयंभूः' इति ।**

**अचित्त्व[4]प्रतिबद्धश्च सर्वोऽपीन्द्रियगोचरः ।**
**तेन नैन्द्रियकं ज्ञानमात्मानं स्प्रष्टुमर्हति ॥ १७ ॥**

(भाट्टसंमतमानसप्रत्यक्षविषयत्वशङ्का)

**स्यान्मतम्-भौतिकत्वात् बहिरिन्द्रियाणि मा नाम आत्मनि प्रवर्तिषत । मनस्तु प्रवर्तिष्यते अभौतिकत्वादिति-तन्न, तस्यापीन्द्रियत्वे भौतिकत्वस्यापरिहार्यत्वात् । यथाऽऽम्नायते 'अन्नमयं हि सोम्य मनः' इति । प्रपञ्चितश्चैतस्मि (श्चैतदेतस्मि?) रूपणे[5] ॥**

**अथोच्येत-अस्ति तावदहमित्यपरोक्षावभासः प्रत्ययः । न चैन्द्रिय[6]कत्वमन्तरेणासौ**

---

१. ननु सिद्धपरवाक्यप्रामाण्येऽपि आम्नायस्य क्रियार्थत्वान्न सिद्धवस्तुन्यात्मनि तात्पर्यम् । न च तच्छेषतयापि तद्बोधनैदम्पर्यम्; अप्राप्ते हि शास्त्रमर्थवत् । आत्मा च प्रत्यक्षप्राप्त इति श्रोत्रियोपरि मीमांसकः शङ्कते नन्विति । प्राभाकरस्तु मीमांसकः कार्यपरतयैव सर्वशब्दप्रामाण्यमाह । भाट्टस्तु वेदस्य प्रवृत्तिनिवृत्तिमात्रे तात्पर्यमिति । २. श्रोत्रियः खण्डयति **मैव**मिति । ३. **व्यतृणत्**-हिंसितवान् अनादृतवानिति वा उतृदिर् हिंसानादरयोरिति धातुः । वीत्युपसर्गबलात् हिंसादिकृद्भूत्वा सृष्टवानित्यर्थो वा । ४. **प्रतिबद्धः** व्याप्यः । आत्मा नेन्द्रियग्राह्यश्चित्त्वादिति व्यतिरेक्यनुमानमिह विवक्षितम् । तत्र व्यतिरेकव्याप्तौ इन्द्रियग्राह्यत्वमचित्त्वरूपहेत्वभावव्याप्यं भवति । ५. मनस आत्मत्वविचारघट्टे अधस्तात् ।

६ **ऐन्द्रियकत्व**मिति । अहमितिप्रत्ययः इन्द्रियजन्योः अपरोक्षावभासत्वादिति प्रयोगः ।

संभवति । क्लृप्तश्च बहिरिन्द्रियागोचरेऽपि सुखादौ स्वान्तस्वातन्त्र्यमिति तन्निमित्त एवाय-महम्प्रत्ययो युक्तः । प्रयोगश्च भवति-आत्मा मानसप्रत्यक्षग्राह्यः बहिरिन्द्रियायोग्यत्वे सति प्रत्यक्षत्वात् सुखादिवदिति—

(मानसप्रत्यक्षसाधकस्याभासीकरणम्)

तन्न ; संवेदनेन व्यभिचारात् । [1]न च तत् अप्रत्यक्षम् , जानामीत्यनन्योपाधिकतया प्रतिभानात् । अप्रत्यक्षत्वे च संवेदनस्यासिद्धिरेव[2] स्यादित्युक्तमेव ॥

(ज्ञानस्य मानसप्रत्यक्षाविषयत्वसमर्थनम्)

न[3] च तदपि मानसप्रत्यक्षतया सपक्षे निक्षेपमर्हति, विमर्दासहत्वात् । यदा खलु कुतश्चिदात्ममनस्संयोगात् विषयसंवित् उदयमासादयति, तदैव किं तत[4] एव तद्गोचरमपि वेदनं जन्यते, उतान्यदाऽन्येनेति वाच्यम् । न च युगपदुभयजननं संभाव्यते । तथा हि सति परापरतत्तद्गोचरनिरवधिकधीनिकुरुम्बजन्म [5]तत्कालमेवाऽऽपद्येत । न च तदस्ति । युगपदुत्पत्तौ विषयविषयित्वनियमश्च निर्निबन्धनः ॥ असमसमयजन्मना ज्ञानेन वेद्यत्वे न प्रत्यक्षत्वम् , क्षणिकत्वेनाग्रिम[6]ज्ञानस्य आग्राहकज्ञानोदयमवस्थानाभावात् । भावे च सर्वज्ञानानां सर्वदाऽवस्थानप्रसंगात् । कार्यविरोधित्वे[7] चानन्तरमेव संस्कारोदयान्न कालान्तरे स्थितिः—इति संविदो न मानसप्रत्यक्षवेद्यत्वम् ।

(संवेदने व्यभिचारनिगमनम् , दोषान्तरवर्णनञ्च)

[8]न चाप्रत्यक्षा संविदिति स्फुटो व्यभिचारः ॥ ऐन्द्रियकत्वस्यानात्मत्वप्रतिबद्धत्वा-द्विरुद्धता[9] च ॥ साध्यविकलश्च दृष्टान्तः, सुखदुःखयोः प्रत्यक्षत्वानभ्युपगमात् ।

---

१. नन्वस्मत्पक्षे ज्ञानस्यातीन्द्रियत्वात् प्रत्यक्षत्वरूपहेत्वंशाभावात् कथं तत्र व्यभिचार इति भाट्ट शङ्कायां तदतीन्द्रियत्वं निरस्यति **न चेति**। २ **असिद्धिरेवेति**। ज्ञानस्य या सामग्री तयैव ज्ञानकार्योपपत्तौ ज्ञानमिति वस्त्वेव न सिद्ध्येदित्यर्थः। उक्तमिदं न्यायकुसुमाञ्जलौ न्यायसिद्धाञ्जनादौ च। ३. कथं व्यभिचारः, साध्यस्यापि सत्त्वादिति तार्किकशङ्कां क्षिपति **नचेति**। ४. किं संवेदनजनकेनाऽऽत्ममनस्संयोगेनैव संवेदनविषयकज्ञानान्तरमप्युत्पाद्यते इत्यर्थः। ५. **जन्मेति**। घटज्ञान-तद्ज्ञानज्ञान-तद्ज्ञानज्ञानज्ञानेत्येवमनन्तज्ञानोत्पत्तिः स्यादित्यर्थः। **तत्काल**मिति पदे बहुव्रीहिः। **असमसमयेति**। भिन्नकालेत्यर्थः। **युगपदिति** पूर्वं स्थितमिन्द्रियसन्निकर्षबलात् , पश्चाज्जातेन विषयीक्रियत इति युक्तम् । अन्यथा युगपदनेकोत्पत्तौ एकस्य विषयत्वमन्यस्य विषयित्वमेवेत्यत्र गमकं नास्तीति। ६. **अग्रिमेति**। पूर्वेत्यर्थः। ७. कार्यनाश्यत्वे इत्यर्थः। कार्यं विरोधि यस्येति बहुव्रीहिः। ८. ननु संवेदने प्रत्यक्षत्वघटितहेतोरप्यभावान्न व्यभिचार इति पूर्वं भाट्टशङ्कायां परिहारं पूर्वकृतं स्मारयन् तत्र व्यभिचारं निगमयति **नचेति**। ९. व्याप्यस्यैन्द्रियकत्वस्य साधको हेतुर्व्यापकानात्मत्वसाधकोपीति धर्मिविशेषविपरीतसाधनात्सिद्धान्तहानेश्च

(सुखदुःखादिस्वरूपशोधनम्)

अनभ्युपगमश्चेन्द्रियपौष्कल्यनाशयोरेव[1] सुखदुःखत्वात् । न हि तस्मिन्नप्रत्यक्षे तत्पौष्कल्यं वैकल्यं वा प्रत्यक्षं भवति । इन्द्रिय[2]स्वरूप इवाभ्यासपाटवात् तयोरपरोक्षत्वाभिमानः, मनोऽवस्थाभेदेष्विव चानुमेयमनोवादिनाम् । यस्तु सुगतमतावलम्बी विज्ञानाभिन्नहेतुजतया तयोरपि तदन्तर्भावमभिमन्यते ; कणभक्षपक्षाश्रयणेन वा तयोरात्मविशेषगुणत्वम्—ताभ्यां सुखदुःखा[3]धिकरणं व्याचक्षीत ; स्वत[4]स्सुखीत्येतद्विमर्शो वाऽन्नत्यम् । रागद्वेषादयस्तु चैतन्यस्यैवावस्थाविशेषास्तद्वदेव प्रत्यक्षीभवन्तीति न तन्निदर्शनेनानुमानोदयः । सुखप्रयुक्तविषयीकारचैतन्यं रागः ; तद्विरोधप्रयुक्तविषयीकारं तदेव[5] द्वेषः ; भूतदुःखज्ञानेन तच्चलनं (चेतश्चलनं?) शोकः ; आगामितज्ज्ञानेन चेतश्चलनं भयमित्यादि लक्षणग्रन्थादेवावगन्तव्य[6]मित्यलं प्रविस्तरेण ॥

एकस्य चात्मनो निरंशस्य न स्वापेक्षया ग्राह्यग्राहकभावः, विरोधा[7]दित्यप्युक्तमेव । अंशभेदाश्रयणे तत्सिद्धये चांशान्तरमाश्रयितव्यम्, तथा तत्र तत्रेत्यनवस्था ; संघातत्वञ्चा[8]त्मनः॥

(पुनर्भाट्टशङ्का)

ननु[9] च ग्राहकावभासः श्रुत्या(?) स्वसिद्धान्तश्रद्धाविप्रलब्धबुद्धिभिरभिहितः, इन्द्रियादिप्रत्यासन्नतत्तत्पदार्थमात्र[10]स्फुरणात् । तादृशोपि क्वचिदस्तु नाम प्रत्ययः । सत्त्वागन्तुकात्म[11]

---

विरुद्धता । न्यायप्राच्यग्रन्थेषु विरुद्धत्वं साध्याभावसाधकत्वरूपंसिद्धान्त विरोधरूपञ्चोक्तम् ।

१. **खम्** इन्द्रियम् । शोभनं खं सुखम् ; दुःस्थं खं दुःखमिति व्युत्पत्तिरपीह भाव्या ।

२. चक्षुषा पश्यामीत्यादौ । **अनुमेयेति** । अहमर्थभूतमन्तःकरणं मनः साक्षिभास्यमिति पक्षे कामादिमनोवस्थाभानं युज्यते । अन्यमते त्वपरोक्षत्वाभिमान एवेति । ३. अधिकरणमिदं **न्यायतत्त्वस्थम्** ।

४. देहेन्द्रियेतिकारिकास्थान्तिमपदविवरणं भाति । तथाच सुखदुःखयोरात्मविशेषगुणत्वेपि धर्मभूतज्ञानावस्थादिरूपत्वेन स्वयंप्रकाशत्वान्मनोग्राह्यत्वानङ्गीकारात् साध्यवैकल्यमेवेति भावः। ५. **तदेव** चैतन्यमेव ।

६. तथाच रागादौ स्वयंप्रकाशे साध्यं नास्ति, शोकादौ च चेतोवृत्तौ हेतुरपि नास्तीति न कश्चित् दृष्टान्त इति।

७. कर्मकर्तृविरोधादित्यर्थः । ८. अंशो ह्यवयव एवेति सावयवत्वापत्तिरित्यर्थः ।

९. एवमात्मनो मानसप्रत्यक्षग्राह्यत्वे दूषिते, प्राभाकरसंमतग्राहकावभासपक्षादरेण स्वपक्षदूषणं क्रियत इति मत्वा भाट्टस्तत्रानुपपत्तिं प्रदर्श्य स्वाशयमाह **नन्विति** । ग्राहकावभासो नाम इन्द्रियजन्यघटादिविषयग्राहिवित्तिषु आत्मनो गृहीतृत्वेन रूपेणावभासः । अत्र श्रुतिः, 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इत्येवमादिः । **श्रुत्या** अन्यथा गृहीतार्थया । यद्वा **श्रुत्याः** इति षष्ठ्यन्तं **स्वसिद्धान्तेत्यत्रान्वेति** । **श्रुत्येति** स्थाने वित्त्येति स्यात् । तदा घटपटादिवित्तिकृतो ग्राहकावभास इत्यर्थः । १०. **मात्रेति** । घटादिप्रकाश एवानुभवसिद्धः, न ज्ञानज्ञात्रोरिति । ११. ज्ञाने जातेऽर्थ

प्रतियोगिकप्राकट्यप्रकाशादिपदाभिधेयार्थधर्मानुमितज्ञानविशिष्टमानसप्रत्यक्षसिद्धात्मनिबन्धनः। (तत्र प्राभाकरसमाधिः)

उच्यते । अहो खलु स्वानुभव एव विभ्रमः परीक्षकाणाम्, यत् विषयानुभवसमये पूर्वावस्थातो न कश्चिद्विशेषमयमात्मनोऽवबुध्यत इति। उक्तं ह्येतत्—ईदृश एवायमर्थो ज्ञायते नवेति न विद्मः, मम वा प्रतिभासते परस्य वेत्यपि न विद्मः इति न जातुचिदेवं प्रतीतिरस्ति; ज्ञानज्ञात्रोरनवभासे तादृश्यपि प्रतीतिरापद्येत-इति। सोयं परसंचेतितात् स्वसंचेतितस्यातिशयः [1]सर्वत्र परिस्फुरन् असति ग्राहकावभासे नोपपद्येत। [2]अनुमितज्ञानाऽऽलम्बनत्वे च अज्ञासिषमित्येव प्रतिभासः स्यात्; न, जानामीति; ज्ञानजन्यार्थातिशयदर्शनतद्व्याप्त्यनुसन्धानानुमानोदयसमयेऽनुमित्सितज्ञानस्यातिवृत्तत्वात् । ज्ञानानुमानासंभवः पूर्वमेवोक्तः। मानसप्रत्यक्षत्वञ्च[3]ात्मग्राह्यधीनिरस्तम्(?) । तथासति हि स्वपरवेद्ययोरनतिशयः [4]स्यात् ॥

---

आत्मानं प्रति प्रकटो भवतीति आगन्तुकः अर्थस्य धर्मः प्राकट्यम् **आत्मप्रतियोगिकः** आत्मनिरूपित इति। तथाच पूर्वम् अयं घट इत्येव ज्ञानं जायते। घटमहं जानामीति तु न सर्वत्र। क्वचिदेव तु ज्ञाततया, प्राकट्यं, प्रकाश इत्युक्तेन तेनार्थधर्मेण ज्ञानेऽनुमिते अनुमितज्ञानवान् आत्मा मनसा प्रत्यक्ष्यते तथेत्यर्थः। न च कर्मकर्तृविरोधः, अंशभेदेन एकस्यैव तदुभयसंभवात्। न चात्मनस्सांशत्वापत्तिः, आत्मनो देहादिमत्तया ग्राहकत्वं, प्रत्यक्त्वादिमत्तया ग्राह्यत्वमिति रूपभेदादेवोपपत्तेः। रूपमेवात्रांशः। ईदृशस्थले कर्मकर्तृविरोध एव नास्तीति वा स्वीक्रियत इति। १. **अतिशयः**-संदेहप्रतिभटत्वरूपः। ज्ञानज्ञात्रोरभाने यथा परस्य घटज्ञाने सत्यपि, 'घटः परेण ज्ञायते न वा', 'घटस्तस्मै भासते न वा' इति संदेहोऽस्माकम्, तथा स्वविषयेपि स्यादिति भावः। २ नन्वम्भसि पिपासोपशमनशक्तेरिवाप्रत्यक्षस्यापि ज्ञानस्य झटित्यनुमानात् संदेहानुदय इति शङ्कायां तदुपेक्षया दोषान्तरमाह **अनुमिते**ति। ३. आत्मा-त्वं ज्ञानस्वरूपं ग्राह्यो यस्यास्सा धीस्तया निरस्तम्। धियो मनोग्राह्यत्वरूपतार्किकपक्षोपि धियस्स्वप्रकाशत्वस्वीकारान्निरस्त इत्यर्थः। यद्वा आत्मा जीवो ग्राह्यो ययेति। जीवस्य मानसप्रत्यक्षत्वं भाट्टोक्तं धिय एव ग्राहकात्मावभासकत्वस्वीकारान्निरस्तमित्यर्थः। अत्र 'मानसप्रत्यक्षञ्चात्मग्राहि अधो निरस्तम्' इति पाठः स्यादिति पूर्वमालोचितम्। स्थितसमर्थनं त्वेवं कृतम्। **मानसप्रत्यक्षत्व**मित्यस्य मानसप्रत्यक्षसिद्धत्वमित्यर्थः मानसं प्रत्यक्षं यस्येति बहुव्रीहिं विना न सुलभः। परन्तु पूर्वमपि (६५) तथा प्रयोगोऽस्ति। अत्र ग्राह्येत्यक्षरं पूर्वं संयोज्य, मानसप्रत्यक्षग्राह्यत्वञ्चात्मनो धीव्यभिचारनिरस्तमिति स्यादित्यपि तर्कयन्ति। यदत्र आत्मग्राह्येत्यनन्तरं धीत्यतः प्राक् अक्षरभ्रंशचिह्नं क्वचिदस्ति (१५९८ः) ४. ज्ञानं स्वस्य वा भवतु, परस्य वा। सर्वथा घटस्य वेद्यत्वमविशिष्टम्। एवं सति परवेद्यात् स्ववेद्येऽ**तिशयः** विशेषः स्वस्मैभासमानवित्तिविषयत्वरूपो वाच्यः। स च ग्राहकानवभासे न भवतीति।

(पुनर्भाट्टोन्मेषः)

[1]ननु कथमिव ग्राहकानवभासे स्वपरवेद्ययोरनतिशयप्रसङ्गः ? न हि ग्राहकसिद्धिनिबन्धनः स्वपरवेद्यविशेषः ; स्वसमवेतविषयबोधजन्मना परसमवेतबोधजन्मना च तद्विशेषोपपत्तेः । स्वपरसंबन्धिबोधविशेषोदयव्यवस्थाऽपि स्वीयपरकीयेन्द्रियार्थसन्निकर्षादिज्ञानहेतुसामग्रीभेदनिबन्धना । [2]न चात्मसिद्धिरपि तत्सामग्र्यनुप्रवेशमर्हति, इन्द्रियादेरिवानवभासमानस्यैव हेतुत्वसंभवात् । न च विषयबोध एवात्मबोध इति सांप्रतम् । न ह्यर्थान्तरसिद्धिरर्थान्तरस्य सिद्धिर्भवति ; अतिप्रसङ्गात् । अपिच यदधीना भावानां रूपभेदव्यवस्था, तदपि हि संवेदनं तदानीं निलीनरूपमेवेन्द्रियादिवत् । कुतस्तु पुनस्तदाश्रयस्यात्मनः प्रतिभासप्रसक्तिः ? यदाहुः—इदमहं जानामीति त्रितयावभासः सार्वत्रिकः-इति, तदप्यनुभवानारूढमेव, अनन्तरमेव प्रतिक्षिप्तमिति ॥

(भाट्टदूषणेन प्राभाकरस्य स्वमतपरिष्करणम्)

[3]अस्तु तर्हि ग्राहकतयैव सर्वार्थग्रहणसमयेष्वात्मसिद्धिः । अभ्युपगन्तव्या हि संविदः स्वतस्सिद्धिः ; सर्वप्रकारसाधनान्तरनिराकरणात् । सत्याश्च तस्याः कदाचिदनवभासादर्श-

---

१. अन्ते उक्तं स्वपरवेद्ययोरनतिशयं परिहरन् ग्राहकावभासं खण्डयति **नन्विति** । परवेद्ये परसमवेतवित्तिविषयत्वं; स्ववेद्ये स्वसमवेतवित्तिविषयत्वमित्ययमतिशय एव स्वपरवेद्ययोरतिशयः; तत्र स्वस्मैभासमानवित्तिविषयत्वं स्ववेद्यत्वमिति न निर्वाच्यमिति शंकार्थः । अत्र स्वपरवेद्ययोरनतिशय इत्यत्रातिशयपदेन पूर्वोक्तस्य संदेहप्रतिभटत्वरूपातिशयस्य ग्रहणे **नन्वित्यादि**समनन्तरवाक्योच्यमानेन स्वसमवेतबोधोत्पत्तिरूपविशेषेण यथाश्रुते संदेहनिवृत्त्युपपादनायोगात् अत्र विवक्षितोऽतिशयोऽन्यः । **अनुमितेत्यादि**पूर्वग्रन्थस्तु पूर्वोक्तातिशयानिर्वाहदोषपरिहाराभिसंधिपूर्वकः । अस्तु वा पूर्वोक्तातिशय एवात्र विवक्षितः । नन्वित्यादिग्रन्थतात्पर्यं त्वित्थम्-स्वपरवेद्यस्थले हि स्वस्मिन् बोधः, परस्मिन् बोध इति विशेषोऽस्ति । तथाच परगतबोधस्य स्वयं ज्ञाततालिङ्गानुमान-मानसप्रत्यक्षान्यतरग्राह्यत्वायोगेपि स्वगतबोधस्य तथाग्रहणसंभवात् झटित्येव तद्ग्रहणस्वीकारात् क्षणविलम्बस्य दुर्ज्ञानत्वाच्च न कश्चिद्दोष इति । **जन्मना** उत्पत्त्या ।
२. ग्राहकावभासे सत्येव स्ववेद्यत्वरूपोऽतिशयः सुवच इति वदतः को भावः ? किं पूर्वमात्मावभासः, ततस्स्वस्य घटवित्तिरिति, किं वा घटवित्तिरेव घटमिवात्मानमपि गृह्णातीति विकल्प्य द्वयमपि क्रमेण दूषयति **नचेत्यादिना** ।

३. नन्विदमस्मदाकूतम्—विषयवित्तौ नात्मसिद्धिः कारणम्, न वा वित्तावात्मा विषयः ; तस्याः विषयमात्रगोचरत्वात् । किन्तु विषयवित्तिवेलायां वेदितुस्सिद्धिः प्रकाशो भवति ; वित्त्यभावे च न प्रकाश इति वित्तिभास्यत्वमात्मनः, वित्तिश्च स्वप्रकाशेति घटमहं जानामीति त्रितयावभासोपपत्तिः । अत्र वित्तिजनकसामग्र्येव वित्तिं वेदितारञ्च भासयतीति प्राभाकरो भाट्टं खण्डयति **अस्त्विति** ।

नाच्च । यथा च संविदः प्रकाशाव्यभिचारः, तथा प्रपञ्चितं प्रथमा (प्रमाऽ) धिकर[1]ण इति नात्रोपक्षिप्य प्रतिक्षेप्तव्यम् । [2]सतोपि प्रमेयजातस्य स्वापादिसमयेऽनुपलब्धेरभ्युपगतं तावत् संविदस्तत्साधकत्वम् । अतः क्लृप्तार्थान्तरसाधनभावया तयैवात्मनोपि सिद्धि-रभ्युपगन्तुं न्याय्या । (स्वापमोक्षयोरहम्भानाभावोपपादनं प्राभाकरीयम्)

यत्तु[3] विषयवित्त्युपरमेऽपि स्वापसमये अयमात्मा प्रकाशत इति, तत् उपपत्ति[4]भिरुपप(पा ?)द्यमानमपि यथाप्रतीति [5]व्यवहरतां न चित्तमनुरञ्जयति ॥

[6]अपवृक्तस्य तु ज्ञानं हेत्वभावान्न संभवि ।
नित्यत्वे नित्यमुक्तिः स्यादर्थवादास्तथोक्तयः ॥ १८ ॥

निर्धूतनिखिलकरणकलेवरज्ञानकर्मवासनानुबन्धस्यापवृक्तस्य न खलु स्वपरसंवेदनो-दयनिबन्धनं किंचित् संभाव्यते । न च मनसो नित्येन्द्रियत्वेन तत्संयोगादेव तदा ज्ञानं जन्यत इति युक्तम्; स्वरूपतो गगनवन्नित्यस्यापि सतस्तस्य इन्द्रियभावेन ज्ञानोत्पादक-त्वस्य धर्माधर्मावरोधनिबन्धनत्वात् ।

धर्माधर्मावरुद्धं सन्मनो ज्ञानस्य साधनम् ।
सति नित्येन्द्रियत्वेऽपि श्रोत्रवत् करणत्वतः ॥ १९ ॥

न च योगजधर्मानुगृहीततत्संयोगस्य साधनत्वम्, 'क्षीयन्ते चास्य कर्माणि', 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः' इत्यादिशुक्लेतर[7]सकलकर्मप्रक्षयश्रुतिविरोधात् । धर्म-फलत्वे चापवर्गस्य पुनरावृत्तिप्रसङ्गः । 'नास्त्यकृतः कृतेन', 'तद्यथेह [8]कर्मजि (चि) तो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इत्यादिश्रवणाच्च । नचात्मा[9] (?).

१. **अधिकरण** इति । **न्यायतत्त्वे** इति शेषः । २. घटादेरेव स्वप्रकाशत्वं कुतो नेत्यत्राह **सतोऽपीति** । अनेन वित्तिरात्मसाधनी अर्थान्तरसाधनत्वेन क्लृप्तत्वादिति विवक्षितेऽनुमाने हेत्वसिद्धिशंकापरिहारः । ३. वेदान्तिपक्षं प्राभाकरः खण्डयन् आत्मनो वित्त्येकभास्यत्वं समर्थयते **यत्त्विति** । ४. सुख-महमस्वाप्समित्यादिभिः । ५. अहम्भाने तदा सति 'अहमात्मानमन्वभूव'मिति व्यवहारस्स्यात् । "सुप्ता-पादुत्थिताश्चैवं निर्विद्यन्ते हि कामुकाः । वृथैयमन्तरेणैव कामिनी यामिनी गता ॥ आश्लिष्टामप्य-बुध्वैनां मृतवच्छयितं मया" (शास्त्रदी. १. १. ५) इत्यपि व्यवहरन्तीति । ६. **अपवृक्तस्य** अपवर्गं धाप्तस्य; मुक्तस्य । एतत्कारिकाविवरणमेव **निर्धूतेत्यादिना** । संवेदनोदयस्य **निबन्धनम्** मूलम् । ७. **शुक्लेतरेति** पुण्यतदितरेत्यर्थः । ८. अत्र **जित** इति पाठ उपलभ्यमानः फलनिर्देशेषु इमान् लोकान् जयतीत्येवं जिधातुप्रयोगादुपनिषदि चित इत्यत्र जित इति पाठं रोचयमानानामनुकूलः । ९. आत्मसत्तैवेति पाठमपीह मन्यन्ते । **आत्मसत्तया** पुष्कलकारणात्ममात्रसत्तया । कारिकोक्त मनः तदिति परामृश्यते । पृथक्पदम् । **तदपीत्यस्यापि** मनोपीत्यर्थः । **आत्मा सत्तयेति**

सत्तयैव तदानीं तज्ज्ञाननिमित्तमिति वाच्यम्, क्लृप्तत्यागाक्लृप्तकल्पनप्रसक्तेः । तन्मात्र-निमित्तत्वे च सर्वदा आत्मस्वरूपवत् तदपि विद्यत इति संसारानवतारप्रसंगात् । बन्ध-मोक्षावस्थयोरविशेषापत्तेश्च । न च देहेन्द्रियादिप्रतिबद्धतयेदानीं [1]तदभाव इति वाच्यम्; तत् खलु प्रतिबन्धकम्, यत् सति पुष्कलकारणे कार्योदयं निरुणद्धि । न चाद्याप्यात्मनस्त-त्पुष्कलकारणत्वं सिद्धम्, शरीरेन्द्रियवतामेव ज्ञानदर्शनात् । क्लृप्तज्ञानकारणभावस्य [2]तस्यैव तद्बन्धकत्ववचनमुन्मत्तवचः । अतो नास्त्यपवर्गदशायां ज्ञानम् । तात्कालिकज्ञानसुखादि-वादास्तु[3] आत्मज्ञानविधिशेषतया गुणवादेन नेतव्याः । अतो विषयवित्तिसमय एवात्म-सिद्धिनियमात् यथोक्तनीत्या अर्थवित्तिषु वेदितृतयैवात्मसिद्धिरिति ॥

(प्राभाकरखण्डनमात्मस्वयम्प्रकाशत्वकथनाय)

इदमप्यात्मतत्त्वापरिज्ञानोल्लसितपरिमितमतिविकल्पजल्पितमिति न रोचयन्ते त्रय्य-न्तविदः । विषयवित्तिर्हि विषयवित्तिरेव । न हि तया आत्मवित्ति(त्तिः) स्वरूपं वा (आत्मा वित्तिस्वरूपं वा?) सेद्धुमर्हति, अतद्विषयत्वात् । यो हि यत्संविद्विषयो न भवति, नासौ तया सिद्ध्यति, रूपसंविदेव रसः । अविषयौ च विषयवित्तेर्बुद्धिबोद्धाराविति तावपि न तया सिद्ध्यतः ॥ ननु[4] वेद्यस्वभावोऽयं यत् स्वविषयसंविदा सिद्ध्यतीति । वित्तिस्तु वित्तिरेव, वेदिता च वेदितैवेति कुतस्तयोर्वेद्यस्वभावानुप्रवेशः? उक्तं हि तयोर्मानसप्रत्य-क्षागोचरत्वमनुमेयत्वासंभवश्च । [5]कुतस्तर्हि वित्तिसिद्धिः? ॥ स्वत एव । स्वयंप्रकाशा हि संवित् ॥

---

पाठसत्त्वे तज्ज्ञानेत्येकपदमात्मज्ञानार्थकम् । **सत्तयैव** स्वमात्रम् । **तदपि** आत्मज्ञानमपि । **विद्यते** विद्येतेत्यर्थः । १. **तदभावः** ज्ञानाभावः । २. **तस्यैव** देहादेः । ३. **वादाः** 'सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्', 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इत्यादयः । **गुण-वादेन** गौण्या वृत्त्या । अज्ञानकार्यस्य कस्याप्यभावात् ज्ञानित्वोक्तिः, दुःखस्येषदप्यभावात् सर्वसुखोक्ति-रिति भावः । ४. घटवित्तितदाश्रयौ न घटवित्त्यधीनसिद्धिकौ घटवित्त्यविषयत्वादित्यनुमाने हेतौ वेद्यत्वे सतीति विशेषणं देयम् । **यो हि यत्संविद्विषयो न भवतीति** पूर्वोक्तसामान्यमुखव्याप्तौ हेतुकोटौ वेद्यत्वे सतीति विशेषणमिष्यते । तथा च घटवित्तितदाश्रयावित्यनुमानं हेतौ वेद्यत्वविशेषण-मन्तरा दुर्वचम् । तद्विशेषणे च स्वरूपासिद्ध्या न प्रकृतसाध्यानुमानसंभव' इति प्राभाकरश्शङ्कते **नन्वित्यादिना असंभवश्चेत्यन्तेन** । ५. वित्तिवेदित्रोः प्रकाशे विषयत्वं नापेक्षितमिति सत्यम् । वित्त्यधीना च वेदितृसिद्धिरिति वदता वित्तिसिद्धिः किमधीनेति वक्तव्यमिति सिद्धान्ती पृच्छति **कुत** इति । प्राभाकरः प्रत्याह **स्वत** इति । अत्र तालकोशे 'स्वतन्त्र एतेति विलिख्य 'न्त्र' इत्यक्षरोपरि निरासचिह्नं निक्षिप्तम् । तदनवधानेन तदक्षरमपि गृह्णद्भिः स्त्रीलिङ्गानुसारेण स्वतन्त्रैवेति शोधयित्वाऽन्यत्र मुद्रितम् । स्वत एवेत्येव पाठः ।

(वित्तिस्वतस्सिद्ध्याक्षेपः)

मैवम्-सापि हि विषयवदेवान्यस्यैव प्रकाशमानतया न स्वतः सिद्ध्यति । स्वतस्सिद्ध्यन्ती च सा किमिति कंचिदेव प्रति चकास्ति, न सर्वान् प्रति ॥ [1]तत्समवायादिति चेत्-यत्समवायिनी हि या संवित् तस्यैव सा चकास्ति, नेतरस्य, तदसमवायादिति—[2]यद्येवम्, आश्रितस्तर्हि आत्मसंम्बन्धनिबन्धन एव संविदः प्रकाशः, [3]तद्भावाभावानुविधानात् । यद्युच्येत-प्रकाशस्वभावाया एव सत्याः प्रतियोगिविशेषाव[4]च्छेदायैव तदपेक्षा, न स्वरूपसिद्धय इति ; कुतः खल्वयं निश्चयः? यदि हि प्रतियोगिनिरपेक्षैव कदाचिदात्मस्वरूपमिव संवित् प्रकाशेत, तत एवमध्यवस्येमापि । न च तथाऽस्ति । आश्रयप्रतियोगिसापेक्षैव संयोग[5]पुत्रत्वादेरिव तस्याः स्वरूपसत्तेति न पृथक्सिद्धस्त्युत्प्रेक्षावकाशः ॥ सत्यास्संविदः प्रकाशव्यभिचाराभावात् स्वरूपप्रयुक्तः प्रकाश इति चेत्-सत्याः किं तस्याः आत्मसम्बन्धव्यभिचारोऽस्ति ? अपिचैवं सुखदुःखादयोऽपि [6]त्वन्मते स्वतसिद्धास्स्युः । न हि तेऽपि सन्तो न प्रकाशन्ते ।

अथ अर्थान्तरसाधकतया सर्ववादिसंमतायाः संविद एव परं (वरं ?) [7]स्वयंप्रकाशत्वमाश्रितम् ; तयैव तथाभूतया तदितरबाह्याभ्यन्तरसकलपदार्थसिद्ध्युपपत्तेः [8]किमनेकस्वयंप्रकाशभावाभ्युपगमेनेति भावः— तथासति, सर्वस्यार्थस्य तद्वित्तेस्साक्षी सर्वत्र संमतः ।

आत्मैवास्तु स्वतः सिद्धः किमनेकैस्तथाविधैः ॥ २० ॥

---

सिद्धान्त्याह **मैव**मिति । **स्वतःसिध्यन्ती** चेति । स्वतः प्रकाशते चेदित्यर्थः । १. प्राभाकराशयः पुनरपि **त**दिति । **तत्समवाया**दिति स्वोक्तं स्वयमेव प्राभाकरो विवृणोति **य**दिति । २. सिद्धान्त्याह **यदी**ति । ३. आत्मसंबन्धादात्मने प्रकाशत इयं संवित्, अन्यसंवित्तु आत्मसंबन्धाभावादात्मने न प्रकाशत इत्यात्माधीनसिद्धिरेवं संविदस्त्वित्यर्थः । ४. ममेयं संवित्, मह्यं प्रकाशत इति आत्मवैशिष्ट्यभानाय आत्मापेक्षेति । उपरि **आश्रयप्रतियोगी**ति प्रतियोगिपदेन विषयग्रहणेऽप्यत्र प्रतियोग्यवच्छेदायेत्यत्र तत्पदेनात्मग्रहणम् । अन्ययत्किञ्चिद्भाने आत्मसम्बन्धस्यापेक्षितत्ववर्णनापेक्षया स्ववैशिष्ट्यभाने स्वसंबन्धापेक्षावर्णनं ह्युचितम् । अस्तु वा विषयवैशिष्ट्यमेव प्रतियोग्यवच्छेदः स्वारस्यात् । संविदो न स्वप्रकाशायात्मापेक्षा, किन्तु विषयसंबन्धायेति । तथाच भाष्यम्, "स्वसंबन्धितया ह्यस्यास्सत्ता विज्ञप्तितादि च" इति । ५. संयोगादिकं हि अनुयोगिप्रतियोग्युभयापेक्षसत्ताप्रकाशोभयम्, संयुक्तयोर्द्वयोरग्रहे संयोगाग्रहात् तथा पितापुत्राग्रहे पुत्रत्वाग्रहात् । तद्वदिति । ६. त्वन्मत इति । स्वमते तु संविद एव स्वतस्सिद्ध्यभावात् सुखादेर्ज्ञानावस्थारूपत्वाद्वा संवित्तुल्ययोगक्षेमतैवेति भावः । ७. **वर**मिति पाठे आश्रयितुमिति उचितमिव । परन्तु **प्रकरणपञ्चि**कादौ बहुलमद्दीशः प्रयोगः । ८. **अनेके**त्यादि । सुखादिस्वयंप्रकाशत्वेत्यर्थः । ननु वित्तेस्स्वतस्सिद्धिं विहाय आत्मसंबन्धमात्रात् प्रकाशस्वीकारे आत्मनित्यत्वाणुत्वधर्माधर्मादयोपि तत एव पकाशेरन् । अतो वित्तिप्रकाशः स्वरूपप्रयुक्त इत्यास्थेयम् । एवमपि वित्तेरात्मानं प्रत्येव प्रकटत्वादात्म-

(वित्तिस्वतस्सिद्धावप्यात्मनस्तदनपेक्षप्रकाशत्वम्)

**किञ्च— यो यस्य साक्षी तेनैव तस्य सिद्धिर्न लौकिकी[1] ।**

**अर्थस्येवार्थवित्तेरप्यात्मा साक्षी हि लक्ष्यते ॥ २१ ॥**

**[2]सन्तु नाम अर्थवित्तयः स्वतः सिद्धाः; तथापि न ताभिरयमात्मा प्रत्यक्षीभवति, तत्साक्षित्वात् । यत्साक्षी खल्वयं पुरुषः, न तेनासौ प्रत्यक्षः, घटसाक्षात्कारीव घटेन । अर्थसंविदाञ्च साक्षात्कारी चेतन इति सोऽपि न ताभिरपरोक्षीभवति ॥**

(आत्मस्वयम्प्रकाशत्वम्)

**[3]सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः ।**

**सर्वे पदार्थास्तेनात्मा निरपेक्षस्वसिद्धिकः ॥ २२ ॥**

**न हि कश्चित् पदार्थः स्वप्रकाशायासाधारणसजातीयार्थान्तरापेक्षो दृष्टः । न खलु घटः स्वसिद्धये घटान्तरमपेक्षते; अपेक्षते तु विजातीयमालोकादि । एवमालोकोऽपि प्रकाशमानो नालोकान्तरमपेक्षते; नापि स्वापेक्षप्रकाशं घटादिकमपेक्षते; अपेक्षते तु विजातीयमिन्द्रियम् । एवमिन्द्रियमपि नेन्द्रियान्तरं स्वापेक्षप्रकाशमालोकादि घटं वाऽपेक्षते; अपेक्षते तु विजातीयं संवेदनम् । एवं संवेदनमपि संविदन्तरं स्वाधीनसिद्धिकमिन्द्रियादिकं वा नापेक्षते स्वसिद्धौ; अपेक्षते तु विजातीयं स्वाश्रयभूतं स्वतन्त्रमात्मानम् । एवमात्माप्यात्मान्तरं, स्वाधीनसिद्धि संविदिन्द्रियादिकमपि स्वापरोक्षे(क्षाय) नापेक्षते इत्यन[4]न्यापेक्षा ह्यात्मस्वरूपसिद्धिः ।**

(आत्मनि नित्यचैतन्यस्थापनम्)

**तदेवं चित्स्वभावस्य पुंसः स्वाभाविकी चितिः ।**

---

संबन्धोऽपि कामं तत्प्रकाशसामग्रीप्रविष्टोऽस्तु । न चैवं विषयं विना वित्तिप्रकाशाभावाद्विषयस्यापि वित्तिप्रकाशकारणत्वापत्तिः, अतीतानागतादिरूपतया तस्य तदयोगादित्याक्षेपे, वित्तिस्वतस्सिद्धिं संमत्यैवाह **किञ्चेति** । १. **न लौकिकी** लोकानुभवोपेता न । वित्तिर्नात्मसाधनी तत्साक्षिकत्वात् घटादिवदिति प्रयोगः । २. कारिकां विवृणोति **सन्त्विति** । ३. ननु संविदप्रकाश्यत्वेऽप्यन्याधीन आत्मप्रकाशोऽस्तु ; तत्रेयं कारिका । **सजातीयस्वसाध्यार्थ**त्वन्नाम साध्यत्व-सजातीयत्वान्यतरसंबन्धेन स्वविशिष्टार्थत्वम् । **साध्य**त्वं प्रकाश्यत्वम् । **आत्मसिद्धिः** स्वरूपप्रकाशः । तथाचात्मा निरुक्तसंबन्धेन स्वविशिष्टार्थनिरपेक्षप्रकाशः पदार्थत्वात् घटादिवदिति प्रयोगः । साध्यत्वसजातीयत्वैकैकघटनया प्रयोगद्वयं वा । एतत्कारिकाविवरणं **तत्त्वटीकायां** (२७५ पु.) **न्यायकुलिशे** (७५ पु) च द्रष्टव्यम् । ४. **अनन्यापेक्षेति** । न च विजातीयापेक्षा आत्मसिद्धिः, तस्यापि वित्तिवेद्यान्यतरतया स्वसाध्यत्वात् तदपेक्षणायोगात् । एवमात्मनः स्वरूपेण प्रकाशे नानुमानं, नागमः, न मानसप्रत्यक्षं, नापि विषयवित्तिः कारणमिति स्वरूपांशेऽन्याप्रकाश्यत्वं स्वप्रकाश्यत्वञ्चोक्तम्, नित्यत्वाणुत्वाद्याकारान्तरवत्तयाऽऽगमानुमानप्रत्यक्षप्रकाश्यत्वमपि वक्ष्यते । **तदेव-**

नानापदार्थसंसर्गात् तत्तद्वितित्व[1]मश्नुते ॥ २३ ॥

यथैव खलु सूर्यालोकस्तेनतेनार्थभेदेन संसर्गात् तत्तत्प्रकाशो भवति, घटप्रकाशः, पटप्रकाश इति—एवमात्मनः प्रकार(स्वभाव)भूतं चैतन्यमर्थविशेषसंसर्गात् घटसंवित् पटसंविदित्यादि[2]प्रख्योपाख्ये प्रतिपद्यते । ते च चैतन्यस्य दशाविशेषाश्चेतयितुरात्मनो [3]धर्मविशेषत्वादेव तस्यापरोक्षा भवन्ति, कादाचित्कबोधवादिनामिव बोधस्य विषयभेदा-[4]वच्छेदादयः ।

(अनित्यं चैतन्यमिति पूर्वपक्षः = तत्र नित्यत्वेऽनुपपत्तिः)

ननु[5] आत्मनश्चैतन्यमागन्तुकमिति न्यायवैशेषिकविदः, तन्मतोपजीविनश्चाभिनवमीमांसकाः ; अर्थेन्द्रियसन्निकर्षाद्यन्वयव्यतिरेकानुविधानात् ; गच्छामि, अगच्छमित्यादिवत् जानामि, अज्ञासिषमित्यादिकालावच्छेदप्रतीतेः । स्वापतुरीयादिदशासु च बोधाधारत्वे सुप्तप्रबुद्धबद्धमुक्तादिव्यवस्थाऽभावप्रसंगाच्च । नित्यस्य च ज्ञानस्यात्मसमवायिनः[6] प्रतिकर्मव्यवस्थाऽपि दुरुपपादैव । तदा हि प्रकाशनशीलतया तस्याः, एकस्यां संविदि सर्वमेव प्रकाशेत ; न वा किंचित्, अविशेषात् । [7]अन्यदा तु यदर्थसन्निकर्षजुषा इन्द्रियलिङ्गादिना या धीर्जन्यते, तदीयैव सेति व्यवस्था युक्तिमती ।

(सिद्धान्त्याशयखण्डनम्)

[8]स्यान्मतम्-इन्द्रियादिप्रणाडिकया चैतन्यमेव तेनतेनार्थेनानुरज्यमानं तत्प्रकाशतया तदीयत्वेन व्यवतिष्ठते, अनुरागस्य चागन्तुकतया इन्द्रियाद्यनुविधानं कालावच्छेदः स्वापादिव्यवस्था चोपपद्यत इति— तदसत् ; अर्थान्तर[9]सन्निकर्षेऽर्थान्तरस्यानुरागासंभवात् ॥ चैतन्यमपि तथा निष्क्रम्य सन्निकृष्यत इति चेन्न—अमूर्तस्याकाशस्येव निष्क्रमणप्रवेशा-

मित्यस्य चित्स्वभावस्येत्यत्रान्वयः । उक्तहेतुना स्वरूपेण स्वयंप्रकाशतयासिद्धस्येत्यर्थः । संप्रति 'चैतन्यप्रयुक्त एवात्मप्रकाशः । स चैतन्यानित्यतया स्वापमूर्च्छामोक्षादौ नानुवर्तेत इति वादं चैतन्यनित्यत्वस्वीकारेणापि निरसितुमारम्भः । तदाह **पुंसः स्वाभाविकीति** । १. **तत्तद्वित्तित्वमिति** पाठ ईशावास्यकूरनारायणीयभाष्ये १६ मन्त्रे दृष्टः, 'तत्तच्चित्तत्वम्', 'तत्तच्चिह्नत्वमिति पाठद्वयमुपेक्ष्येहाऽऽदृतः । २. **प्रख्या** बुद्धिः । उपाख्या शब्दः । ३. चैतन्यगतावस्थाविशेषाणामात्मधर्मत्वं परम्परया । यद्वा आत्मनो यो धर्मस्तदीयविशेषत्वादित्यर्थः । ४. **विषयभेदावच्छेदः** विषयविशेषवैशिष्ट्यम् । आदिना ग्राह्याः प्रत्यक्षत्वानुमितित्वादयः । ५. अथ चैतन्यमनित्यमिति पूर्वपक्षी प्रत्यवतिष्ठते **नन्वित्यादिना अत्राहुरात्मेतिकारिकाप्राग्ग्रन्थेन** । ६. **प्रतिकर्मव्यवस्था** प्रतिविषयव्यवस्था नियतविषयकत्वम् । ७. **अन्यदा** अनित्यत्वपक्षे । ८. सिद्धान्तिप्रश्नानुवादः **स्यान्मत**मिति । तन्निरस्यति **तदसदिति** । ९. **अर्थान्तरेति** । इन्द्रियसन्निकर्षे हीन्द्रियानुरक्तत्वमेव वस्तुनस्स्यात्, न ज्ञानानुरक्त-

द्यनुपपत्तेः । गुणश्च चैतन्यं गुणिनमपहाय कथमन्यतो यास्यति ? न चार्थोऽन्तः प्रविशति । स हि बहिर्देशसंबद्धः सर्वलोकप्रत्यक्षः । [1]जात्यादिषु चानुपपत्तिस्तुल्यैव ।

(आत्मनश्चैतन्यस्य चैकप्रत्यगर्थद्रव्यत्वशङ्कापरिहारः)

अथो[2]च्येत-द्वेधा खल्वयं प्रत्यगर्थोऽवतिष्ठते बहलो विरलश्च । तत्र बहलः प्रत्यक् चेतनक्षेत्रज्ञादिपदपर्याय आत्मा । विरलस्तु चैतन्यज्ञानादिपदाभिधेयः प्रत्यगर्थतन्त्रतया गुण इत्युपचर्यते तेजोवत् ; यथा बहलं तेजः प्रदीपः अग्निरिति, विरलं तु प्रभा ज्योतिरिति । अतो विरलात्म[3]प्रदेशतया चैतन्यस्याऽऽलोकस्येव गमनं (गमन ?) संयोगादिकमुपपद्यत इति ॥ इदमनुपपन्नम् ; निरवयवस्यामूर्तस्यासङ्गस्यात्मनो बहलविरलतादिधर्मानुपपत्तेः । यदि हि सावयवत्वमूर्तत्वानित्यत्वसंसर्गित्वादिकमपि धर्मजातमात्मन्यनुमन्वीमहि, तत एवमङ्गीकुर्वीमहि । न च तदनुमन्तुमुचितम्, अचेतनत्वापातादित्यलमनेनाऽऽर्हतमतानुकारदूषितेनाऽऽत्मवादेन । (चैतन्यविभुत्वखण्डनम्)

[4]अथ मतम्-आत्माऽयमनवयवेन सर्वतस्सर्वार्थविभासनसमर्थचैतन्यानुबन्धः सर्वव्यापी। अथ च न सर्वमस्य परिस्फुरति, तमोगुणप्रतिबन्धात् । सत्त्वोत्कटैस्तु करणैः स्वकस्वकपाटवानुसारेण पाटिते तु तमसि तेतेऽर्थाः प्रतिभासन्ते । अतोऽन्तरेणापि ज्ञानार्थयोर्निष्क्रमणप्रवेशौ उपपद्यत एवार्थविशेषोपरागः संविद इति ॥ [5]एवमप्यर्थातिशयमात्रहेतुत्वादिन्द्रियलिङ्गादेः ज्ञानस्येव ज्ञापकत्वं न स्यात्, ज्ञानहेतुत्वाभावात् । न चार्थप्रकाशस्य ज्ञानत्वम्, प्रकाशमानतयाऽर्थस्यापि ज्ञातृत्वप्रसंगात् । यदाहुः, 'आत्मधर्मस्य चैतन्यस्य विषयेण संयोगो ज्ञानमित्युच्यते' इति—तत्रापि संयोगस्योभयनिष्ठतया स एव प्रसङ्गः । अनुभवविरोधश्च, अहमिदमिदानीं जानामि, नेदानीमित्यात्मसमवायिनोरेव ज्ञानभावाभावयोरनुभवात् ॥ [6]अविकृतप्रकाशहेतुकिरणसंहतावप्यहिममहसि [7]प्रकाशकत्वप्रख्योपाख्यानवदुपपद्यत इति मा वोचः । तत्र हि गभस्तीनां द्रव्यतयाऽऽकुञ्चनप्रसारणद्रव्यान्तरसंयोगविभागादेः संभवादुपपद्यते व्यवस्थोपलब्धिः । चैतन्यं तु गुण इति न तथा व्यवस्थामर्हति ।

---

त्वमिति । १. घटादेर्मूर्तत्वादन्तःप्रवेशः शङ्क्येतापि । अमूर्तजातिगुणादिविषये तु चैतन्यस्येव क्रियानुपपत्तिरेवेति । २. सिद्धान्ते प्रत्यगर्थातिरिक्तं तद्धर्मभूतं द्रव्यं चैतन्यम् । अत्र तु कश्चिदेकमेव द्रव्यमंशभेदेनात्मज्ञानोभयात्मकमिति निष्क्रमणाद्युपपादयन् जैनगन्धी खण्ड्यते । ३. विरलो य आत्मैकदेशस्तत्तया । ४. सक्रियत्वसावयवत्वादिस्वीकारं विना ज्ञानज्ञात्रोर्विभुत्वस्वीकारेण निर्वाहं शंकते **अथे**ति । ५. यथा ज्ञानमर्थे प्राकट्यं व्यवह्रियमाणतां वा जनयत् अतिशयहेतुरेव, न तु ज्ञापकम्, तदेन्द्रियादिकमपि तमःपाटनरूपातिशयमात्रकरं स्यादिति । ६. उक्तं सूर्यालोकदृष्टान्तं खण्डयति **अविकृते**ति । ७. अत्र अर्थविशेषप्रकाशकत्वेति पाठो भाव्यते ।

(आत्मनि नित्यानित्यज्ञानद्वयभङ्गः)

अथोच्येत[1]-द्विधा हि ज्ञानमात्मनः, स्वस्मिन्नन्यत्र च । तत्राऽऽद्यमुदयास्तमयरहितमात्मस्वरूपप्रयुक्तमनवरतमनुवर्तते । इतरत्तु तत्तदर्थसंबन्धीन्द्रियाद्यागन्तुकहेतुभेदायत्तात्मलाभं तत्तद्भावाभावानुविधायि तत्तदर्थप्रकाशतयोदीयते, लीयते च । तदपेक्षयैव स्वापजागराद्यवस्थाव्यवस्थाऽपि सङ्गंस्यत-इति ॥ उच्यते । अभ्युपगच्छेमाप्येवम्[2], यदि नित्यमात्मविज्ञानमस्तीत्यत्र किमपि साधनमुपलभेमहि ।

(सुषुप्तावात्मानुभवसाधक प्रातर्दृष्टतटाकन्यायभङ्गः)

नन्वङ्गीकृतस्तावत् जाग्रदवस्थायां सर्वदाऽऽत्मानुभवः; स्वापादिषु चानु[3]मीयते, तात्कालिकस्य विषयज्ञानभावस्योत्तरोत्तरकालं परामृश्यमानत्वात् । यत्कालीनोऽभावः परामृश्यते, तत्कालीनेन तदाश्रयस्वरूपज्ञानेनापि हि भाव्यम्, मध्याह्नकालपरामृश्यमान[4]इव प्रातस्समयपरिदृष्टतटाकतीरादिवर्तिनि कुञ्जराद्यभावे । यत्कालीनाभावाश्रयतया यः परामृश्यते, स तत्कालीनस्वरूपानु[5]भववान्, यथा प्रातरनुभूततटाकतीरादिः । स्वापादिकालिकार्थानुभवाभावाश्रयतया चायमात्मा परामृश्यते ; अतस्तात्कालिकस्वरूपानुभववानितिमैवम्; अनैका[6]न्त्यात् 'प्रातस्तत्र नाहमासम्' इति स्वाभावभूमितया प्रतीतेन प्रातरनवगतगिरितटाकादिना । अभावप्रतिपत्तिसमये प्रतिपित्सिताभावसमकालवर्तिनस्तदाश्रयस्वरूपस्यावगत्या, विद्यमानत्वे तत्कालतयाऽवगमप्राप्तस्य प्रतियोगिनोऽनवगत्या च भवितव्यमभाव-

---

१. ननु नित्यचैतन्यमङ्गीक्रियतां स्वमात्रविषये ; अन्यविषये चानित्यज्ञानमिति कश्चिच्छङ्कते अथेति ।
२. अपिशब्देन, आत्मस्वयंप्रकाशतयैव निर्वाहात् आत्ममात्रविषयकज्ञानकल्पनं व्यर्थमिति सूच्यते ।
३ अयमात्मा स्वापकालिकानुभवगोचरः तत्काले ज्ञानाभावाश्रयतया पश्चात् (जागरकाले) परामृश्यमानत्वात् । यत् यत्काले किञ्चिदभावाश्रयतया पश्चात्परामृश्यते, तत् तत्कालिकानुभवगोचरभूतम्, यथा संप्रतिकुञ्जराद्यभाववत्तया परिदृश्यमानं प्रातर्दृष्टतीरादीत्यनुमानम् । ४. प्रातःकालावच्छेदेन तीरवर्तितया कुञ्जराभावे मध्याह्नकाले परामृश्यमाने सति प्रातःकालीनेन तदाश्रयस्वरूपज्ञानेनेवेत्यर्थः; अनुषङ्गात् । ५. अनुभवगोचरः इत्यर्थः ; अनुभवगोचरस्वरूपवानिति यावत् । ६. कदाचित् कश्चित्प्रातर्गिरितटाकादिकमज्ञातवानेव मध्याह्ने गिरितटाकादिवृत्तान्तप्रसङ्गे प्रातस्तत्र नाहमासमिति परामृशति । तत्र गिर्यादौ व्यभिचारः, प्रातःकालिकस्वाभाववत्तया परामृश्यमानत्वरूपहेतुसत्त्वात्, प्रातःकालिकावगतिगोचरत्वरूपसाध्याभावादिति ॥ यदि तत्कालावच्छिन्नमाश्रयज्ञानं नापेक्षितम्, किं तर्ह्यपेक्षितमित्यत्राह **अभावे**ति । अवगत्या अनवगत्या च भवितव्यमित्यन्वयः । **समय** इत्यस्य **अवगत्ये**त्यत्रान्वयः । **विद्यमानत्वे तत्कालतयाऽवगमप्राप्तस्ये**ति । यदि प्रतियोग्येव तत्काले स्थितं स्यात्, उपलब्धं स्यादिति वक्तुमर्हस्येत्यर्थः । **अनवगत्ये**ति । तत्काल इति शेषः । **अभावज्ञानस्य**-अभावज्ञानं प्रति ; यत्कालिकोऽ

ज्ञानस्येत्येतावत् । अन्तरेणापि स्वापकालीनमात्मानुभवमिह तदुभयमुपपद्यते [1]प्रत्यभिज्ञयैव प्रबोधे स्वरूपसिद्धेः, जाग्रदनुभवस्येव पटीयसस्स्वापेऽपि सतोऽनुभवस्य सर्वत्र्यस्य सतस्तदानीमस्मरणाच्च[2] ।

(अस्वाप्समिति ज्ञानस्य नित्यप्रकाशासाधकत्वम् )

सुखमहमस्वाप्समित्यादिवृत्तयश्च तात्कालिकदेहेन्द्रियलाघवपाटवादिपर्यालोचनपूर्विकाः न स्मृतयः, जातिवेषसंस्थानादिष्विव । तेऽपि हि परामृश्यन्ते, 'एवञ्जातीयोऽहमीदृशेन वेषेण अनेन संस्थानेनात्येयन्तं कालमस्वाप्सम्' इति ।

अपिच स्मृतित्वेऽपि जाग्रदवस्थायामिव निद्रालक्षणया [3]प्रमाणविपर्ययादिवृत्त्यभावकारणतमोगुणालम्बनया प्रतीत्या तत्कालप्रसिद्धस्यात्मनस्स्मरणम्, न तु सहजसंवेदनसिद्धस्य स्वप्रकाशस्य[4] वा; प्रमाणाभावात् । निद्राऽपि प्रमाणविपर्ययादिवत् वृत्तिविशेष इति तत्रभवान् पतञ्जलिः । यदाह 'अभाव[5]प्रत्ययालम्बना वृत्तिर्निद्रा' इति ।

(वित्त्यधीनात्मप्रकाश—वित्त्यनित्यत्वनिगमनम्)

प्रयोगश्च — विमत्याक्रान्तात्मस्वरूपसिद्धिः, विषयानुभवनिबन्धना आत्मस्वरूपसिद्धित्वात् जाग्रतस्तत्सिद्धिवदिति । तथा आगन्तुकं ज्ञानमात्मविशेषगुणत्वात् सुखादिवत् । न च सुखदुःखादयो नात्मगुणाः अप्रसिद्धाश्रयान्तरत्वे सति अहम्प्रत्ययसामानाधिकरण्येन प्रकाशमानत्वात् ज्ञानवदिति— (नित्यचैतन्यस्थापनारम्भः)

> अत्राहुरात्मतत्त्वज्ञाः स्वतश्चैतन्यमात्मनः ।
> [6]स्वरूपोपाधिधर्मत्वात् प्रकाश इव तेजसः ॥ २४ ॥
> चैतन्याश्रयतां मुक्त्वा स्वरूपं नान्यदात्मनः ।
> यद्धि चैतन्यरहितं न तदात्मा घटादिवत् ॥ २५ ॥

---

भावो यत्र प्रतिपत्तुमिष्टः, तत्कालवर्तित्वेन तस्याश्रयस्यावगतिरभावप्रतिपत्तिसमयेऽपेक्षितेत्युक्तं भवति ।
१ योऽयं पूर्वेद्युरपश्यम्, सोऽहं स्पृशामीति प्रबोधकालिकप्रत्यभिज्ञया प्रबोधरूपे अभावप्रतिपत्तिकाले स्वापकालस्थतयाऽऽत्मस्वरूपमवगतम् । २. यथा कुञ्जराभावज्ञानं प्रति प्रातस्तीरे कुञ्जरानवगतिरपेक्ष्यते । तथा स्वापे विषयानुभवविरहज्ञानं प्रति स्वापकाले विषयानुभवानवगतिरपेक्ष्यते । तत्र तदातनकुञ्जरानवगतिरिदानीन्तनकुञ्जरास्मरणेन यथाऽनुमीयते तथा, तदातनानुभवानवगतिरिदानीन्तनेन तदनुभवास्मरणेनानुमीयत इत्यर्थः । ३ **प्रमाणं** प्रमितिः, **विपर्ययः** मिथ्याज्ञानम् । "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" (१-६) इति योगसूत्रम् । विकल्पः=आहार्यज्ञानम् । ४. **वेति** । आत्मनस्स्मरणमित्यनुषङ्गः । ५ **अभावस्य** प्रमाणादिवृत्त्यभावस्य **प्रत्ययः** कारणं यत् तमः तदालम्बना वृत्तिर्ज्ञानविशेषो **निद्रे**त्यर्थः । ६. स्वरूपमुपाधिः प्रयोजकं यस्य धर्मस्य, तत्त्वात्; यद्वा स्वरूपस्योपाधिर्नि-

[1]चितिशक्त्या न चात्मत्वं मुक्तौ नाशप्रसङ्गतः ।
[चित्यैवान्यव्यवच्छेदे कुतः शक्त्यन्तधावनम् ?]....
[न च देहाद्यभावे सा, किं वा शक्त्या चितेः स्थितौ । ?]........॥ २६ ॥

[2]बुद्धिसुखदुःखादिनिःशेषवैशेषिकात्मगुणात्यन्तिकोपरमलक्षणो हि मोक्षः कणभक्षाक्षचरणमते । न चात्यन्तलुप्तकार्यं वस्तु तत्कार्यजननशक्तमित्यत्र किञ्चित् प्रमाणं क्रमते ; देहादिविशिष्टसंबन्धितया दृश्यमानसुखदुःखज्ञानादिकार्यं विशिष्टवर्तिनीमेवात्मोत्पादशक्तिं कल्पयति, धूम इवार्द्रेन्धनसंबन्धिनि धूमध्वजे स्वोत्पादनसामर्थ्यम्, व्रीह्यङ्कुर इव च सतुषतण्डुले॥ अपिच[3] बोधे सत्येवाऽऽत्मनोऽनात्मव्यवच्छेदे संभवति कृतं तच्छक्त्याश्रयणेन।

(बोधनित्यत्वेऽप्यात्मनोऽन्यत्वम्)

न चैवं सति बोध एव [4]वर(पर)मात्मेति युक्तम्, तस्याऽऽश्रयप्रतियोगिसापेक्षस्वरूपत्वात् ; आत्मनश्च तद्विपरीतस्वभावत्वात् । साक्षाच्च चेतयितुरहमर्थस्य स्फुरणात् । अनुभवतर्कागमबलेन चितिमत आत्मभावस्यानन्तरमेव[4] प्रपञ्चितत्वाच्च ।

(चैतन्यविषयसंयोगस्य ज्ञानत्वनिरासः)

न च चितिमात्रात्मवादेऽपि तस्यागन्तुकविषयसंबन्धे बोधत्वमध्यारोप्य बोद्धृत्वसमर्थनं साधीयः-संबन्धस्योभयनिष्ठतयाऽर्थस्यापि बोद्धृत्वप्रसङ्गात् । न [5]च कार्यकारणभाववत् व्यवस्थितत्वम्—तत्र जनिमतो जनयितुश्च परस्परापेक्षानियमलक्षणसंबन्धः ।

(आत्मविषययोः कार्यकारणभावादिसंबन्धायोगः)

इहापि[6] स एवेति चेन्न—अपेक्षाहेत्वभावात् । किमर्थमर्थश्चैतन्यमपेक्षते, चैतन्यं

---

रूपकः व्यवच्छेदको धर्मस्तत्त्वादिति । १. घटादिष्वनात्मस्वेव सत्सु केषाञ्चिदात्मत्वं चितिशक्तिप्रयुक्तम्, न चैतन्यप्रयुक्तम् । अतश्चैतन्यस्यानित्यत्वेपि न दोष इति चेन्न—तच्छक्तेरप्यात्मनि देहसंबन्धप्रयुक्ततया मुक्तौ नाशापत्तेरविशेषादित्यर्थः । एतदुत्तरार्धं भ्रष्टं 'सतुषतण्डुल' इत्येतदनन्तरविवृतसर्वार्थसंग्राहकम् उपर्युल्लिखिताव्यतरप्रकारेण स्यात् । २. अन्तिमकारिकां विवृणोति बुद्धीति । ज्ञानापरिलोपश्रुत्यादिनिर्वाहाय नित्यशक्तिस्वीकारिणं मीमांसकं प्रत्याह **नचे**ति । ३. न च मुक्तौ साक्षाद्बोधस्वीकारे किञ्चिदनिष्टम्, येन श्रुतिस्वारस्यभञ्जनेन शक्तिपर्यन्तधावनमित्यर्थः। वरमित्येव तालपाठः। ४. **अनन्तरम्**—अद्वैतभङ्गे । ५. 'यथा कार्यकारणोभयनिरूप्यत्वेपि तद्भावरूपसंबन्धस्य, क्वचित्कार्यत्वमन्यत्र कारणत्वञ्च व्यवस्थितम्, तथा बोधात्मकस्संयोग आत्मन्येव, न विषये' इति न युक्तम्; तत्रैकनिरूपितोऽन्यनिष्ठः कार्यत्वादिस्संबन्ध इष्यते, न तु संयोग ईदृशः, अस्य द्विष्ठत्वादित्यर्थः । अत्र विषयसंयोगस्यापि सिद्धान्ते निश्चयादिरूपत्वं वक्ष्यमाणं विमृश्यम् । धर्मधर्मिद्वयनित्यत्वधर्मिनिर्विकारत्वधर्मप्रसारणादिगोचरश्रुत्यादिविरोधरूपं बलिष्ठं बाधकमपि चितिमात्रात्मवादे ध्येयम् । ६. नन्वात्मार्थयोरपि परस्परापेक्षानियमलक्षण एव कश्चित्संबन्धोऽस्त्विति शङ्कते **इहापी**ति ।

वाऽर्थम् ? सिद्ध्यर्थमिति चेत्—कः सिद्ध्यर्थः ? न तावदुत्पत्तिः, [1]तस्याः निर्ज्ञातनिमित्तान्तरत्वात् । घटादयो हि प्रसिद्धमृद्दण्डचक्रभ्रमणादिपर्याप्तनिमित्तान्तरशालिनो न चितिमपि निजजननेऽपेक्षन्ते । निरस्तश्च विज्ञान[2]मात्रवादः । नित्यस्यात्मन उत्पत्त्यर्थमर्थापेक्षेति सुव्याहृतम् ॥ सिद्धिः प्रकाश इति चेत्—किं भोः [3]आत्मा स्वयञ्ज्योतिरप्यर्थाधीनप्रकाशः, यदसौ तदर्थमर्थमपेक्षते ? महनीयमिदमात्मवेदित्वम् । प्रकाशश्च न संविदतिरेकी कश्चिदर्थधर्मस्संभवती(संभवी)त्यावेदितम् । संभवन्नप्यसौ न चितिस्वरूपमात्रनिमित्तः, सर्वदा सर्वार्थप्रकाशप्रसङ्गात् । न हि सदासन्निहितसमग्रकारणं कार्यं कदाचिद्भवति । [4]आगन्तुकातिशयाश्रयणे वा नामान्तरेण ज्ञानमेवाङ्गीकृतमिति तद्वानेवात्मा आयातः ।

(अस्यातिशयस्यागन्तुकक्रियात्वात् स्वाभाविकचैतन्यत्वायोगशङ्का)

नन्वेवमर्थसिद्धिव्यवस्थापकतयाऽभ्युपगतं ज्ञानमागन्तुकं क्रियारूपमिति कथं तत् आत्मस्वभावः ? तथाहि-अर्थान्तरगतत्वे सति जनकद्रव्यान्तरं प्रति कार्यत्वादिकेन रूपेण असाधारणो गन्तव्यदेशप्राप्त्यादिः यं प्रत्यसाधारणस्तत्समवेतागन्तुकासाधारणगमनादिक्रियाजन्यो दृष्टः । तादृशी चार्थसिद्धिर्यं पुरुषं प्रति असाधारणी तत्समवेततादृशक्रियाजन्येति शक्यमनुमातुम्[5] । (तत्परिहारः)

मैवम् । अक्रियाजन्येनाभावप्राप्त[6]क्षेत्रादिस्वत्वेन क्षेत्रिणं प्रति असाधारणेन क्षेत्रजव्रीह्यादिस्वत्वेन चानैकान्त्यात् । न च निर्व्यापारतया क्षेत्रिणस्तत्राजनकत्वम्; व्यापा[7]रकालादिना व्यभिचारात् । तद्भावभावित्वस्य चाविशेषात् ॥ [8]तज्जीवनमेव तत्र जनकव्यापार इति चेत्—ननु तत् सस्यपालनादिसाधारणमिति कथमसाधारणक्रियाजन्यत्वम् ? अपिचैवं सति

---

१. सिद्धिरुत्पत्तिश्चेत्, आत्मार्थयोरुत्पाद्योत्पादकभावस्संबन्धः; प्रकाशश्चेत्, प्रकाश्यप्रकाशकभावः । तत्र प्रथमे उत्पाद्यो विषयो वा स्यादात्मा वा । नाद्य इत्याह **तस्या** इति; नान्त्य इत्याह **नित्यस्येति** । २. घटादेरपि क्षणिकविज्ञानरूपत्वं विज्ञानरूपात्मजन्यत्वञ्च बौद्धमतं सहोपलम्भनियमदूषणादिना प्राङ्निरस्तम् ३. द्वितीयपक्षेपि किमात्मनोऽर्थप्रकाश्यत्वम्, अर्थस्य वाऽऽत्मप्रकाश्यत्वम्? नाद्य इत्याह **किमिति**; नान्त्य इत्याह **प्रकाशश्चेति** । ४. ननु सर्वदा सर्वार्थप्रकाशवारणाय तदातदा तत्तत्प्रकाशोपयोगी कादाचित्कोऽतिशय आत्मनि स्वीक्रियत इत्यत्राह **आगन्तुकेति** । ५. अर्थप्रकाश आत्मसमवेतासाधारणक्रियाजन्यः आत्मभिन्नवृत्तित्वे सति कार्यत्वादिरूपेणात्मासाधारणत्वात् गन्तव्यदेशगतगन्तृसंयोगवत् । सामान्यमुखीव्याप्तिः । गन्तृगतगमनक्रियायां व्यभिचारवारणाय सत्यन्तम् । ६. क्रयादिक्रियानिरपेक्षेण पित्राद्यभावे पुत्रादेः स्वतःप्राप्तेन । तद्भावभावित्वस्येत्युपरितनपदानुसारेणात्र भावाभावप्राप्तेत्यत्र भावप्राप्तेति स्यात् । ७. व्यापारादेर्व्यापारान्तराभावेपि जनकत्वात् । ८. क्षेत्रिजीवनमेव । **तत्र** क्षेत्रादिस्वत्वे ।

तदे[1]वार्थप्रकाशेऽपि जनकव्यापारोऽस्तु ; किमक्लृप्तकल्पनया ॥ सत्यपि तस्मिन्नर्थो न प्रकाशत इति चेत् -स्वप्ने वा किं यथोदितं सति जीवने जायत एव ? ॥ व्रीह्यादिसत्ताऽप्य-पेक्ष्यत इति चेत्—इहापीन्द्रियादिप्रत्यासत्तिरिति समानश्चर्चः । [2]अतो यं प्रत्यसाधारणो यथोदितधर्मस्तदीयासाधारणधर्मानिमित्त इत्येतावत् । स चेष्यत एवाऽऽत्मनश्चैतन्यं रवेरिव तेजस्वित्वम् । (अथ पूर्वपक्ष्युक्तार्थदूषणारम्भः)

न [3]च हेतुभेदानुविधायितया, 'जानामि', 'अज्ञासिषम्' इत्यादिकालावच्छेदप्रतीतेर्गम-नादेरिव ज्ञानस्याऽऽगन्तुकत्वमनुमेयम् ; आदित्यप्रकाशेनानैकान्त्यात् । अस्ति हि तत्रापि, इमं देशमादित्यः प्रकाशयति प्राचीकशत् प्रकाशयिष्यतीति प्रतीतिः । [4]स्वारसिकत्वेऽप्यादि-त्यप्रकाशस्य प्रकाश्यदेशसंबन्धकादाचित्कतया अवच्छेदप्रतीतिरुपपद्यत इति चेत्-इहापि तर्ही-न्द्रियादिप्रत्यासत्तिसमासादितयोग्यभावोऽनुभाव्यभेदः स्वाभाविकमात्मनश्चैतन्यगुणमव-च्छिनत्तीति तदपेक्षयैवेन्द्रियाद्यनुविधानञ्च अतीतानागतप्रत्युत्पन्न[5]त्वप्रत्ययप्रयोगौ चोपपद्यन्ते।

(चैतन्ये गमनादिवैलक्षण्यम्)

कथं पुनरत्र निर्णयः, मणिद्युमणिप्रकाशादेरिवौपाधिकोऽयं भेदः, न तु गमन-पचनादेरिव स्वाभाविक इति ? तद्रूप्येणैव प्रत्यक्षत्वात् । न हि जातुचित् अचिद्रूपोऽयमात्मा लोष्टादिवद् दृष्टचरः । यश्च यद्गुणतयैव [6]साक्षाद्भवति, स तत्स्वभावः, मरुदिव स्पर्शगुण-तयैवाध्यक्ष्यमाणः । यो यत्स्वभावो न भवति, स तद्विरहेणापि स्वरूपत उपलभ्यते, गम-नादिरहिततयेव देवदत्तादिः । (शरीरदृष्टान्तासिद्धिः)

[7]शरीरवदिति चेन्न, असिद्धत्वात् ! स्यादेतत्-यथैव खल्वस्वभावभूतेनापि शरीरेण सध्रीचीन एवायं चेतनश्चकास्ति, तथा चैतन्येनापीति ॥ तन्नैवम्-असिद्धत्वात् । न हि तनु-विशिष्टतयैवायं चेतनः परिस्फुरति । योगिनां प्रणिहितमनसामुपरतबहिरिन्द्रियाणाञ्च देहानुसंधानविरहेणाप्यहमिति स्फुटमनुभवात् । जानामीति प्रत्ययः शरीरवर्णसन्निवेशनिर्भास-

---

१ **तदेव** जीवनमेव। २. नन्वेवमिन्द्रियप्रत्यासत्त्यादिकादाचित्कापेक्षाबलादेव सदासन्निहितसमग्रकारण-कत्वाभावेन सर्वदा सर्वार्थप्रकाशप्रसङ्गवारणादात्मन्यागन्तुकातिशयाश्रयणमनावश्यकमिति कथं धर्मभूत-ज्ञानसिद्धिरित्याशङ्कायां पूर्वपक्ष्यनुमानपरिष्करणपूर्वकनिगमनव्याजेनानुमानतोपि ज्ञानसिद्धिं दर्श-यति **अत** इति । यथोदितधर्मो यं प्रत्यसाधारणः, तदीयेत्येवं योजना । **एतावदिति** । न तु धर्मे आगन्तुकत्वक्रियात्वादिकं साध्यघटकमिति । ३. एवं चेतनस्वभावश्चैतन्यमित्युपपाद्य तदागन्तुकत्व-वाद्युक्तांशान् क्रमेण खण्डयिष्यन् पूर्वपक्षारम्भोक्त हेतुद्वयं निरस्यति **नचेति** । **हेतुभेदो**ऽर्थेन्द्रियसन्नि-कर्षाद्यात्मा कारणविशेषः । ४. **स्वारसिकत्वेपि** स्वाभाविकत्वेपि । ५. वर्तमानेत्यर्थः । ६. प्रत्यक्षी-भवति । ७. इमावेव शङ्कापरिहारौ **स्यादेत**दित्यादिना विव्रियेते । ननु स्वापप्रलयादौ चैतन्यप्रकाशे

शून्यतया तत्त्वान्तरगोचर इति च प्रागेवावोचम् । कर्मानुगुण्येन सुरमनुजादिजातीयतया भिद्यमानासु आगमापायिनीषु तनुषु मनस इवैकस्य वर्ष्मणस्स्वभावानुबन्धित्वेनाश्रयितुमशक्यत्वात् । [1]लिङ्गस्य पुनरनुवृत्तावप्यप्रत्यक्षत्वान्न व्यभिचारित्वम् ।

(स्वापादावप्यात्मप्रकाशापत्तेस्त्रेधा विकल्प्य विमर्शः)

बोध[2]स्वाभाव्ये पुंसः स्वापमूर्च्छयोः प्रकाशप्रसङ्ग इति चेन्न—विकल्पासहत्वात् । तथाहि--प्रकाश [3]इति पदार्थमात्रसाधारणं बोधजन्यं प्रकटतादिपदपर्यायं धर्ममभिप्रेत्य वाऽयं प्रसङ्गः, अथ बोधमेव, तदविप्रकर्षं वा । आद्ये, तदभावादेव न प्रसङ्गः, अभा[4]वश्च प्रकटित एव संवित्स्वतस्सिद्धिसमर्थनसमये । भावेऽपि, तमःप्रतिबन्धादप्यनु[5]दयस्संभवी । इतरयो[6]रभिमतमेवापादितमित्यदोषोद्भावनम् । बोधस्वाभाव्ये हि पुरुषस्य स्वापादिदशासु च तथाभावोऽभिमत एवेति न हि तदापादनं दोषाय ।

(व्यवहाररूपप्रकाशस्य स्वापादावनापत्तिवचनम् )

अथ मतम्—स्वापादावपि स्वानुभवसद्भावे जागर इव व्यवहारप्रसङ्ग इति ॥ नैवम्—व्यवहारागोचरत्वात् । कः खल्वात्मनि व्यवहारः ? न ह्यसावादातुं हातुमुपेक्षितुं वा शक्यः ॥ व्याहारः प्रसज्यत इति चेत्--किमङ्ग ! निर्विकल्पक-बालमूकादिवेदन-विषयो व्याह्रियत एव ? ॥ करणपाटवव्यवजिहीर्षादिसहकारिविरहात् तत्र व्याहारानुदय इति चेत्--समानोऽयं विधिरितरत्रापीति निरनुयोज्यानुयोगः ।

(स्वापकालिकात्मानुभवस्य जागरे स्मृत्यापत्तिपरिहारः)

स्मृति[7]प्रसङ्ग इति चेन्न, अवृत्तित्वात् । यद्युच्येत--मूर्च्छादावात्मानुभवाभ्युपगमे, अर्थान्तरानुभव इव, एवमहमन्वभूवमिति परस्तात् स्मृतिः प्रसज्यते---इति, तन्न--अवृत्तित्वात् । न हि मूर्च्छा प्रस्वापो वा बुद्धिवृत्तिविशेषः दर्शनस्पर्शनादिवत् । येन

---

विना अहमितिप्रकाशस्य संमतत्वात् कथं चैतन्यविशिष्टतयैव तदुपलम्भ इति चेन्न-पूर्वपक्षिणा यदायदाऽऽत्मप्रकाश इष्यते, तदातदा चैतन्यविशिष्टतयैव स्फुरणस्य विवक्षितत्वात् । १. स्थूलशरीरविलक्षण-सूक्ष्मशरीरात्मकैकलिङ्गशरीरवैशिष्ट्यस्य सुरमनुजादिसर्वदशास्वप्यात्मनि सत्त्वस्वीकारेपि तच्छरीरस्व-भावकत्वरूपसाध्यस्यात्मनि विरहेपि च न व्यभिचारः, तद्विशिष्टतयोपलभ्यमानत्वरूपहेत्वभावादिति ।

२. **स्वापतुरीये**त्यादिना पूर्वपक्ष्युक्तहेतुं खण्डयितुमाह **बोधे**ति । **प्रसङ्ग** इति । न हि बोधे सत्यपि पुंसोऽप्रकाशो जागरे दृष्ट इति भावः । ३. **इति**-इति पदेन । ४. प्राकट्याभावश्च । ५. स्वापादिकालेऽनुत्पत्तिः । ६. **इतरयोः**-बोधस्तदददूरत्वं वा प्रकाश इति पक्षद्वये । ७. अनयोरेव शङ्कापरिहारयोर्यद्युच्येतेत्यादिना विवरणम् । **अवृत्तित्वात्** स्वापकालिकाहमर्थप्रकाशस्य वृत्तिरूपत्वाभावात् । वृत्तिरूपस्सकर्मककानुभवो हि स्मृतौ कारणम् , तस्यास्सकर्मकत्वात् । सिद्धान्ते धर्मभूतज्ञानावस्थारूपस्मृतेः तदवस्थारूपानुभवं प्रत्येव सामानाधिकरण्यवशेन कार्यत्वाच्च ।

स्मृतिबीजं संस्कारमादधीयाताम् । किंतूद्भूतेन तमसोपरतव्यापारेषु करणेषु निर्वृत्तिकर्मासिद्धिकबोधस्वरूपेणावस्थानमात्रमात्मनः ॥ न च बोधस्वभावत्वादेवास्य संस्काराधायकत्वम् ; अनवरतोपचीयमानसंस्कारतयाऽनिर्मोक्षप्रसङ्गात् । [1]अनुभवे च स्वानुरूपसंस्काराधाननिरुद्धे सदृशसंबन्धिदर्शनादिसमुद्बोधितनिजबीजानुसारेण स्मरणमुपजायते । न चेहात्मस्वरूपबोधस्य जातुचिन्निरोधो जन्म वा ; नित्यात्मसत्ताप्रयुक्तत्वात् । निमित्तान्तराभावश्चानन्तरमेव[2] व्याकरिष्यते । तदेवमनुवर्तमान एवानुभवे कथं स्मृतिरुदयमासादयेत् ॥ [3]य एवाहं पूर्वेद्युरासम्, स एवाहमद्यापीति स्मृतिसंभिन्नप्रत्ययोऽपि कालावच्छिन्नस्वरूपगोचरः, न स्वरूपमात्रे । [4]अविशदश्च स्वापादौ स्वानुभवः, निर्विकल्पश्च । पटीयसा सविकल्पकेनावगमेन स्मृतिबीजमाधीयत इति [5]च कुतस्तत्प्रसङ्गः ? साम्याच्चानुभवाभिमानः शरीरतद्धारण(शरीरधारण?)प्रयत्नानुसंधानवत्[6] ।

(सुप्तमुक्तादिष्वयवस्थाभावप्रसङ्गभङ्गः)

न चाविकृतस्वाभाविकबोधमात्रेणावस्थाने स्वापमोक्षयोरविशेषापत्तिः, क्लेशवासनानां गुणा[7]भिभवस्य चैकत्र भावात् ; इतरत्र तदत्यन्तनिवृत्तेः [अतः ?] [अ?] संप्रज्ञातसमाधावपि[8] परमवैराग्यशालिना पटुतरनिरोधसंस्कारेण चरिताधिकारिणा अपवर्गिणा विशेषः ।

---

१. एवं संस्कारासंभवात् स्मृतिर्न भवतीत्युक्त्वा, अनुभवस्यैवानुवर्तमानतयापि स्मृतिर्न भवतीत्याह **अनुभव** इति । २. 'बोधकारणानुवृत्त्यापि बोधानुवृत्तिरुपपद्यते' इत्येतद्दूषणावसरे । ३. कथं तर्हि स्मर्तुमनर्हस्यात्मनोपि स्मरणविशेष इत्यत्राह **य** इति । **संभिन्ने**ति । संवलितेत्यर्थः । ४. आत्मरूपज्ञानस्य बलवत्कारणरूपत्वाभावादपि न संस्काराधायकतेत्याह । देशकालावच्छेदाद्यनवगाहनादवैशद्यं निर्विकल्पत्वञ्च । **इति चे**ति । तद्विषयकस्मरणं प्रति तद्विषयकानुभवस्यैव हेतुत्वात् स्वरूपात्मकबोधं प्रति चाऽऽत्मनोऽकर्मत्वादिति च भाव्यम् । ५. अनुभूतस्याप्यननुभूतस्येव पश्चादस्मर्यमाणत्वाविशेषात् । ६. न हि स्वशरीरस्वरूपमात्रं तद्धारणप्रयत्नञ्च कश्चित् स्मरतीति ।

७. तमोगुणादिनाऽभिभूयमानत्वस्य । इदं सिद्धान्तमोक्षस्वरूपमप्रतिबोध्यैवोत्तरम् । ८. समाधिर्द्विविधः संप्रज्ञातोऽसंप्रज्ञातश्च । आद्यः स्थूलाचेतन-सूक्ष्माचेतन-सात्त्विकानन्दांश-चेतनरूपचतुर्विधालम्बनभेदाच्चतुर्धा । अन्त्यो निरालम्बनः । एकाग्रतासंस्कारपर्यन्तसर्वोपमर्देनेन निरन्तरवाहित्वं निरोधसंस्कारस्य पटुतरत्वम् । **चरिताधिकारम्** अवसितभोगापवर्गरूपोद्देश्यं चित्तम् । **अपवर्गिणा** अपवर्गिकृतः । अत्र **संप्रज्ञातसमाधावपी**त्येव पाठो दृश्यते । तदा च **इतरत्रे**त्यारभ्य **विशेष** इत्यन्तमेकं वाक्यमित्युचिततरम् । अयमर्थः-मोक्षे क्लेशादेः अत्यन्तं निवृत्ततया, प्रमाणादिवृत्तिष्विव संप्रज्ञातसमाधिविषयेपि योऽत्यन्तं विरक्तो निरोधसंस्कारपाटवेन चित्तं चरिताधिकारमकरोत्, तादृशापवर्गिकृतो विशेषस्तद्विलक्षणपुरुषसुषुप्त्यपेक्षयाऽस्तीति । **निवृत्ते**रित्यन्तस्य पूर्वान्वयस्वारस्ये असंप्रज्ञातेति च पाठो

(निद्राया वृत्तित्वे उपपत्तिस्तन्निरासश्च)

[1]कथं पुनर्निद्राया अवृत्तित्वे प्रबुद्धस्य प्रत्यवमर्शाः, 'सुखमहमस्वाप्सम्' इत्याद्याः ? न ह्यननुभूतगोचराः स्मृतयः संभवन्ति । [2]सत्त्वसचिवसमुल्लसिततमोगुणानुभवभावितभावनायोनिः खलु, 'सुखमहमस्वाप्सम्, प्रसन्नं मे मनः, लघूनि मे गात्राणि' इति प्रत्यवमर्शः । रजस्तमस्समुद्रेके तु, 'दुःखमहमस्वाप्सम्, भ्रमत्यनवस्थितं मे चित्तम्' इति । सत्त्वरजसी त्वभिभूय नितान्तमुद्भूते तमसि, 'गाढं (ढ) मूढं सुप्तोऽस्मि, गुरूणि मे गात्राणि, मुषितमिव मनः, मीलितमिव' इति ।

सत्यमेवम् । [3]दत्तोत्तरं ह्येतत्—नैवामी वासनायोनयः प्रत्ययाः ; अपितु तात्कालिकशरीरेन्द्रियमनोवस्थाविशेषपर्यालोचननिमित्ता आनुमानिका इति । एवंरूपा हीमे, 'यतः प्रसन्नं मे मनः, सम्यगाहारपरिणामवशाल्लघूनि चाङ्गानि ; अतस्सुखमहमस्वाप्सम्' इति । स्वापावस्थायां वेन्द्रियोपरमतारतम्यवशाद(दा)विशद-तात्कालिक-तत्तदनुकूलप्रतिकूल-विषयानुसंधाननिबन्धनतयाऽपि स्मरणमुपपद्यत इति न वृत्त्यन्तरत्वं निद्रायाः ।

(निद्राया अवृत्तित्वेऽपि योगसूत्राविरोधः)

कथं तर्हि पारमर्षं सूत्रम्-'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति ? ॥ निरोधपरत्वात् प्र[4]करणस्य न वृत्तिस्वरूपे तात्पर्यं विप[5]र्ययवत् । नह्यतद्रूपप्रतिष्ठं मिथ्याज्ञानं किञ्चिदस्ति,

---

हनेऽयमर्थः—नन्वस्तु स्वापमोक्षयोर्विशेषः ; स्वापसमाध्योः कथम् । संप्रज्ञातसमाधौ सालम्बनवृत्तिरूपविशेषसत्त्वेऽप्यसंप्रज्ञातस्य सर्ववृत्तिनिरोधात्मकतया स्वापतुल्यत्वादित्यत्राहा**संप्रज्ञाते**ति । तत्र हि पुंसो वैराग्यं निरोधसंस्कारश्चरिताधिकारचित्तत्वमपवर्गभाजनत्वञ्च ; नैतानि सुप्त इति । **निवृत्तेः संप्रज्ञाते**त्येव सर्वत्र पाठः । निवृत्तेरित्यत्र वाक्यसमासौ असंप्रज्ञातेति पाठान्तरोहो दर्शितः । तथावाक्यसमासावपि संप्रज्ञातेत्येव पाठरक्षणाय मध्ये 'अत' इति पदमुचितं तर्कितम् ।

१. निद्राया अवृत्तित्वस्य पूर्वपक्षीष्टत्वेपि सिद्धान्त्येकदेशी तत्त्वं पृच्छति **कथ**मिति । २. सत्त्वेन सहोद्रिक्तं यत् तमः, तदनुभवजनितसंस्कारजन्यः । प्रत्यवमर्शाश्चात्र दर्शितप्रकारा योगभाष्ये (१·१०) द्रष्टव्याः । ३. पूर्वपक्षिकृत एतन्निर्वाहप्रकारोऽस्मदिष्ट एव । जागरारम्भकालिकसुखदुःखमोहोपयोगिमनःप्रसादास्थैर्यस्तैमित्यपरामर्शाधीनास्तथाऽनुमितय इति भावः । उक्तत्रिविधप्रत्यवमर्शेषु गाढस्वापप्रत्ययस्यानुमितिरूपत्वेप्याद्ययोर्जागरवदविशदनिद्राकालिकसुखदुःखत्वगोचरप्रमाणादिरूपानुभवजन्यस्मृतित्वमस्तु ; तथाच सुखदुःखविषये स्मृतित्वेपि स्वापांशेऽनुमितिरेवेति न निद्रा नाम वृत्तिरिति । ४. उक्तं हि 'योगश्चित्तवृत्तिनिरोधः' (१-२), 'अभ्यासवैराग्याभ्यां तन्निरोधः' (१-१२) इति । प्रमाणादिवृत्तिगतनिरोद्धव्यत्वसादृश्याद्गौणो निद्रायां वृत्तिशब्दः । ५. 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' (१-९) —अतद्रूपप्रतिष्ठत्वञ्च तद्रूपाप्रतिष्ठत्वम् । तेन संशयस्यापि संग्रहः । यथार्थं सर्व-

सर्वसंविदामर्थाव्यभिचारात् । स चाधिकरणसिद्धः ; साधयिष्यते चोपरिष्टात् । कैवल्यभागि यच्चित्तु (भागि यच्चित् तत् ?) (भागीय[1]चित्त?) प्रत्यनीकतया निद्रादेर्निरोध्यत्वेनोपदेशः ।

(निद्राया वृत्तित्वे तत एव सहजचैतन्यसिद्धिः)

अस्तु[2] वा पूर्वोक्तप्रमाणादिवृत्त्यभावकारणभूतप्रचिततमतमोगुणावलम्बना वृत्तिरेव निद्रा । सन्तु च प्रबुद्धप्रत्यवमर्शाश्च स्मरणानि । तथासति अनवरतानुवृत्तबोधतया स्थितमेव पुंसो बोधस्वभावत्वम् ॥

[3]आह-बोधकारणानुवृत्त्याऽपि बोधानुवृत्तिरुपपद्यत इति कथं तथास्वाभाव्यनिश्चयः ? इत्थम्— यतः स्वतस्ततो बोधात् ऋते पुंसो यथोदितम् ।

तमः स्वापादिकालीनं न सिध्येत् हेत्वसिद्धितः ॥ २७ ॥

उपरतानि हि प्रस्वापकाले सर्वाण्येवेन्द्रियाणि सह मनसा । संस्कारस्य च न स्मृतेरन्यत्र सामर्थ्यम् । न च स्वप्रकाशं तमः; अर्थान्तर(अर्थान्त)(अन्तर)वर्तिनोऽप्यनिशं प्रकाशप्रसंगात् । क्लृप्तश्च सर्वार्थसाधनतया बोध इति तेनैव कारणविरहिणा सता स्वभावभूतेनोद्भू-(द्भूतेनोद्भू)तवृत्तेस्तमसोऽन्यस्य वाऽऽत्मवर्तिनो [4]गुणस्य स्फुरणमिति बलादभ्युपगमनीयम् ॥

---

विज्ञानमिति हि सांख्ययोगादिमतम् । अतो रजतभ्रमो नाम शुक्तिदर्शनरजतस्मृतिसंवलितो रजतभेदाग्रहः अख्यातिः । तत्र दर्शनं स्मृतिश्च प्रमाणादौ अन्तर्भवतीति अग्रहः शिष्यते । स चाभावरूपत्वान्न वृत्तिरिति । **अधिकरणे**ति । न्यायतत्त्वशास्त्रगताधिकरणेत्यर्थः । 1. योगभाष्ये कैवल्यभागीय शब्दस्य तत्रतत्र प्रयोगात्, 'चित्तनदी वहति कल्याणाय पापाय च' इति भाषणाच्चात्र संसारभागं विहाय कैवल्यभागसंबन्धिनश्चित्तस्य निद्रादयः प्रत्यनीका इत्यर्थो युज्यते ।

2. अत्रेदं बोध्यम्—निद्राया वृत्तित्वे तया सह तदाऽऽत्मप्रकाशस्स्यात् ; स च नित्यचैतन्याधीनो वा स्वरूपप्रयुक्तो वा कथ्येतेति भिया पूर्वपक्षिणा तस्या वृत्तित्वं पूर्वं निरस्तम् । पश्चात् तस्याः वृत्तित्वेपि नित्यचैतन्यमात्मनो नास्तीत्युक्तम् । सिद्धान्तिना च तस्या वृत्तित्वे तदधीनप्रकाशः आत्मन आपद्येतेत्यालोच्य पूर्वं तन्निरस्तम् । पश्चात् तद्वृत्तित्वमभ्युपगम्य तत एव सहजचैतन्यं समर्थ्यत इति ॥ ननु सुखमहमस्वाप्समिति स्मृतिरिति सिद्धान्तः ; अत्रानुमितिरित्युक्तमिति विरोधः॥ न ; स्वापांशे ह्यवृत्तित्वपक्षेऽनुमितित्वमुच्यते । तत् सिद्धान्तसंमतमेव । अहमर्थप्रकाशस्तु मूलग्रन्थेऽपीष्टः । परन्तु दुःखमहमितिवत् सुखांशेऽप्यनुमितित्वं वैषयिकस्वल्पसुखस्मृतित्वं वा लक्ष्येत । तत्र तु, दुःखविषये अगत्या तथास्वीकारेऽपि आत्मनोऽनुकूलत्वस्यानुभवप्रमाणसिद्धतया तत्प्रकाशमादाय प्रत्यवमर्शनिर्वाहे बाह्यानुकूलवस्तुग्रहादेर्निद्राकाले कल्पने मानाभाव इत्युत्तरम् । इदं स्वतस्सुखीन्येतद्विमर्शावसरे वक्तव्यमिति नालोच्यत इति । 3. जागरवदनित्यः कारणसंपाताधीन एवास्तु तदापि बोध इति शङ्कते **आहे**ति । 4. **गुणस्य** सत्त्वादेः । अनुकूलत्वस्येति वा ।

(आत्मप्रकाशनित्यत्वानुमानम्)

[1]नित्यप्रकाशश्चात्मा प्रमातृत्वात् । अप्रमातृत्वव्यापकबद्धं ह्यनित्यप्रकाशत्वं व्यापकविरुद्धप्रमातृत्वभागिनि आत्मनि नात्मानं लभते ।

(आत्मप्रकाशस्य स्वरूपप्रयुक्तत्वानुमानम्)

स्वतस्सिद्धप्रकाशत्वमप्यस्य ज्ञातृभावतः ।
अज्ञातृत्वेन हि व्याप्ता परायत्तप्रकाशता ॥ २८ ॥

(प्रकाशपदार्थनिष्कर्षाय प्रश्नः)

[2]कः पुनरयं प्रकाशः, योऽस्य नित्योऽभ्युपेयेत, स्वाभाविकश्च ? कश्चास्यात्मना संबन्धः?

यदि ज्ञानमेव ; संबन्धश्चाश्रयाश्रयित्वम् ;-ततो हेत्वभावेन साध्याभावस्य व्याप्तिमुपदर्शयितुं निदर्शनतया घटादि उपादातव्यम्—यत् अनित्यप्रकाशमन्याधीनप्रकाशं वा तत् अप्रमातृ, यथा घटादीति । तत्र च विशेषनिषेधस्य सामान्याभ्यनुज्ञाऽऽक्षेपकत्वादागन्तुकं ज्ञानं घटादावनुमतमापद्येत । (आत्मनस्स्वरूपप्रकाशविषयत्वानुपपत्तिः)

अथ[3] तन्मा भूदिति विषयविषयिभाव एव संबन्धस्संगीयेत (संगीर्येत?)—ततो नित्यवद्ज्ञानविषयत्वमात्मनः प्रसज्येत । ज्ञानविषयीकारश्च साधनविशेषायत्तत्वेन नियत इति न स्वाभाविकत्वसंभवः ॥ अचेतनगोचर एव तथा नियम इति चेन्न-चेतनान्तरविषयीकारेऽपि तथाभावदर्शनात् । न च अनात्मगोचर[4] एव साधनसापेक्षत्वनियम इति वाच्यम्-आत्मनोऽप्यानुमानिकागमिकयोगज्ञानविषयीकारे तत्सापेक्षत्वदर्शनात् । विरुद्धे चैक(कक्रिय)स्य एकक्रियायां कर्मकर्तृत्वे, सूच्यग्रस्येवात्मनि वेध्यवेधकत्वे । [5]नित्यत्वनिरतिशयसूक्ष्मत्व-

---

1. एवं वृत्तिस्वीकारेऽप्यात्मप्रकाशो न पूर्वपक्ष्युक्तरीत्या वृत्तिप्रयुक्तोऽनित्यः ; किन्तु नित्यः स्वरूपप्रयुक्तश्चेत्यंशद्वयं प्रयोगद्वयेन साधयति नित्येत्यादिना । 2. इतःपरम् उक्तप्रयोगघटकप्रकाशपदार्थशोधनव्याजेन आत्मनि नित्यचैतन्यस्वीकारे पूर्वपक्ष्युद्भावितप्रतिकर्मव्यवस्थानुपपत्तिपरिहाराय परसंमतप्रकाशपदार्थखण्डनेन स्वाभिमतं प्राक् सूचितं बोधाविप्रकर्षरूपप्रकाशपदार्थं स्थापयितुं प्रवृत्तः पृच्छति क इति । 'अयमर्थः प्रकाशते' इत्यत्र प्रकाशो धात्वर्थो ज्ञानम्, आख्यातार्थो विषयिविषयभावः संबन्ध इति तार्किकाः । प्राकट्यं प्रकाशः, आश्रयत्वं संबन्ध इति भाट्टाः । ज्ञानमेव प्रकाशः, तदधीनव्यवहारानुकूलत्वं संबन्ध इति प्राभाकराः । सिद्धान्ते ज्ञानं प्रकाशः, अदूरत्वं संबन्धः ; अदूरत्वपर्यन्तस्य वा तदधीनव्यवहारक्षमत्वस्य वा प्रकाशपदार्थत्वे तु आश्रयत्वं संबन्ध इति विवेकः। तत्र तार्किकादिभिरात्मनित्यप्रकाशोऽसंमतः। तदर्थं साध्यमानोऽयं तेषु कतमस्यच्छायावलम्बनेनेति प्रश्नाशयः। 3. तार्किकच्छायया ज्ञानेनात्मनो विषयविषयिभावसंबन्धस्वीकारे उक्तसाध्यासिद्धिमाह अथेति । 4. अनात्मेति । आत्मा स्वात्मा । 5. तर्हि कर्मकर्तृविरोधे आनुमानिकादिज्ञानकर्मत्वं कथमित्यत्र वैषम्यं दर्शयति नित्यत्वेति ।

व्यापित्वचित्स्वाभाव्यादिरूपेण प्रत्यगर्थस्य औपदेशिकत्वमानुमानिकत्वं वा; न स्वरूपतः। स्वरूपापेक्षयैव स्वतस्सिद्धिरभ्युपेयत इत्यसमाधेयो विरोधः । [1]रूपभेदेन गम्यगमकत्वाङ्गीकारपक्षेऽपक्षस्येव (?) शब्दादेर्न स्वतस्सिद्धत्वम् ।

(प्राकट्यपक्षेण शङ्का)

अथोच्येत-न प्रकाशो ज्ञानम्; अपितु तन्निमित्तश्चेतनेतरसर्वपदार्थसाधारणो धर्मः, यद्वशात् प्रकाशत इति प्रख्योपाख्ये प्रतायेते सर्वपदार्थेष्वविशेषेण । आश्रयाश्रयित्वलक्षणश्च संबन्धस्तेन सह सर्वभावानाम्; स च यथोदितसाधनबलादेव [2]सांसिद्धिको नित्यश्चात्मन इति—

(तत्परिहारः)

पराकृतोऽयं पक्षः-न ज्ञानातिरेकी प्रकाशो नाम । यद्व्यवहारोपजननानुगुणं ज्ञानं तत् प्रकाशत[3]इत्युच्यते । ज्ञेयस्य ज्ञातुः स्वात्मनश्च व्यवहारानुगुणं ज्ञानमुदयत इति युक्तस्त्रिष्वप्येकप्रकारः 'प्रकाशते'व्यवहारः । तत्त्वान्तरप्रकाशाभ्युपगमे तात्स्वाभाव्येन[4] च पुनः किं चैतन्याश्रयणेन ? न च प्रकाश एव तदिति वाच्यम्; घटादेरपि प्रकाशवत्तया चेतनत्वप्रसङ्गात् । यद्युच्येत—सति चेतनावत्त्वे पुंसः प्रकाशमानत्वमिति; संविदीदानीं का वार्ता । चेतनैव हि सा; न चेतयते । अथ [5]संविदस्तत्संबन्धाधीनः स धर्म इति चेत्—कस्तया संबन्धः, यस्तन्निबन्धनम् ? [6]नाश्रयाश्रयित्वम्, घटादेस्तदभावप्रसंगात् । न विषयविषयिभावः, तस्यैवानिरूपणात् । अनिरूपणश्च भ्रान्त्यधिकरणसिद्धान्तारम्भे, संवित्सिद्धौ चानुसन्धातव्यम् । आत्मनस्त[7] (स्व ?)स्य चाप्रकाशप्रसङ्गश्च ॥ [8]ज्ञानाधीनप्रकाशाश्रयतैव सिद्धिः, तया चानुमेयं ज्ञानमिति पक्षःप्रागेव प्रतिक्षिप्तः ।

---

1. नन्विहापि रूपभेदेन निर्वाहोऽस्त्वित्यत्राह रूपेति । शब्दशब्दो हि गोशब्दादेरिव स्वात्मकशब्दस्यापि गमकः। एवं पदपदम् । स्वाध्यायोऽध्येतव्य इति विधिवाक्येन वाक्यान्तरमिव स्वात्मापि गृह्यते । तत्र सर्वत्र न स्वतःसिद्धिः; गम्यत्वं सामान्यरूपेण; गमकत्वं विशेषरूपेणेति भेदादित्यर्थः। अत्र वाक्यान्वयानौचित्येन पक्षस्येति पदायोगादधिकाक्षरानुपलम्भाच्च अपक्षस्येतिच्छेदः । न हि शब्दादावपि स्वतःसिद्धिसाधनमेष्टुं शक्यमिति तस्य पक्षत्वायोगसूचनाय अपक्षस्येति तद्विशेषणम् । 2. प्रमातृत्वादिहेतुबलात् । 3. प्रकाशमानत्वेनोच्यते । 4. प्रकाशः स्वाभाविक इति पूर्वानुमानेनोक्तत्वेन । सिद्धान्ते आत्मनि नित्यप्राकट्यसंमतौ तस्य ज्ञानाधीनत्वे स्वाभाविकत्वं न स्यात् । अतः लाघवाच्च स्वाभाविकचैतन्यगुण एव स्वाभाविकं प्राकट्यमिति भाट्टच्छाया नालम्ब्येति। न प्रकाशसामान्यं चैतन्यम्; किन्त्वात्मप्रकाशव्यवहारश्चेतनावत्त्वाधीन इति शङ्कते यदीति । 5. चेतनया संबन्धात् संविदि प्राकट्यमिति तत्र प्रकाशव्यवहारोपपत्तिः चैतन्याश्रयत्वाभावेऽपीति । 6. चेतनाया आश्रये आत्मन्याश्रितत्वं संविदः । 7. विषयत्वं घटादौ स्यात्; नात्मनि, न वा स्वस्मिन् ज्ञान इति । स्त्रीलिङ्गप्रक्रमात् तस्येति पाठो न युक्तः । यद्वा आत्मनः स्वस्य ज्ञानस्य, तस्य पुंस इति व्याख्येयम् । 8. प्राक्कृतं प्राकट्यखण्डनप्रकारमपि स्मारयति।

(गुरुभाट्टदूषणेनार्थज्ञानसन्निकर्षस्थापनम् )

[1]स्वप्रकाशसंविद्वादिनोऽपि व्यवहारानुकूल्ये [2]वैरूप्यमशक्य(दुष्क)परिहारम् । [3]आत्मनि समवेतं ज्ञानमसम्बन्धिन्यर्थे प्रकाशं व्यवहारं वा कथं प्रसुवीतेत्यपि चिन्त्यम् ॥ इन्द्रियलिङ्गादिस्वकारणप्रत्यासत्तिवशादिति मा वोचः । न खलु लब्धात्मकं कार्यं स्वनिमित्त कारणमनुरुध्य कार्यमारभते । [4]मा भूदुदकाहरणादि घटादेः कुलालादिसमानाधिष्ठानम् । न च निमित्तकारणनाशे कार्यनाशः । नश्यति चेन्द्रियसंप्रयोगादिनाशे रूपादिज्ञानम् । अथ इन्द्रियेण सह चैतन्यमपि निःसृत्य तेन तेनार्थेन सन्निकृष्यते, [5]हस्तादिनेव त्वगिन्द्रियम्, तथासति हि तदुपाधिकत्वात् तज्ज्ञानस्य युक्तं तद्भावानुविधायित्वम् । अन्यथा उत्पन्नं ज्ञानमिन्द्रियार्थसन्निकर्षनिवृत्तौ किमिति निवर्तते ? ।

(निमित्तनाशात्कार्यनाशायोगस्य ज्ञाततानाशेऽप्यतिदेशः)

ज्ञानजन्यार्थधर्मप्रकाशवादिनोऽपि समानोऽयं दोषः । निमित्तकारणं हि ज्ञानम् । कुतस्तन्निवृत्तावर्थप्रकाशो निवर्तते ? कुतो वा यावत्तद्भावमवतिष्ठते ?

(द्वित्वादेरपेक्षाबुद्धिनाशानाश्यत्वम् )

[6]न च संख्यादिनिदर्शनेनात्र प्रत्यवस्थानं युक्तम्—

असिद्धत्वेन नाशस्य संख्याया बुद्धिनाशतः ।
एकसंख्येव संख्यात्वात् अन्याऽप्याद्रव्यभाविनी ॥ २९ ॥
सर्वा ह्येकाश्रया संख्या नित्यानित्यार्थवर्तिनी ।
यावदाश्रयसत्त्येव संमता सर्ववादिनाम् ॥ ३० ॥
द्वित्वादिका परार्धान्ता संख्या याऽनेकवर्तिनी ।
साऽपि संख्यात्वसामान्ये सति कस्मान्न तादृशी ॥ ३१ ॥

---

1. तर्हि प्राभाकरसरणिरेवास्तु, तत्राह स्वेति । २. वक्ष्यति 'अपर्यनुयोज्यं निमित्तवैरूप्यम्' इति। संवित् घटादिकमिन्द्रियप्रत्यासत्तिवशाद्व्यवहारयति, तदभावेपि वेदितारमिति वैरूप्यं निमित्तवैरूप्यम् । यद्वा कार्यान्तरनिमित्तकारणवैलक्षण्येनात्र परं निमित्तानुरोधेन कार्यारम्भो निमित्तवैरूप्यम् । व्यवहारानुगुण-संवेदनत्वरूपप्रकाशपक्षे वक्ष्यमाणं प्रवृत्तिनिमित्तवैरूप्यं वा । घटज्ञानफलस्य व्यवहारक्षमत्वस्य घटे ज्ञान-ज्ञात्रोश्चाविशेषे घटस्यैव कर्मत्वं, न तयोरिति वैरूप्यमपीह सुवचम् । ३. अथ प्रकाशपदार्थत्वेन स्वसंमतस्यार्थ-ज्ञानसंबन्धविशेषस्यावश्यकत्वोपोद्घाततया भाट्टप्राभाकरयोरनुपपत्त्यन्तरमाह आत्मनीति । ४. अन्यथा घटस्य कुलालवत्त्येव देशे उदकाहरणकरत्वं स्यादित्यर्थः। 5. अस्ति ह्यर्थहस्तसन्निकर्षे त्वगर्थसन्निकर्षोपि । 6. ननु द्वित्वादिसंख्या अपेक्षाबुद्धिनाशान्नश्यन्ती दृष्टेत्याशङ्कां संख्यारूपकिञ्चित्पदार्थान्तरस्वीकारपक्षेऽप्यनन्तद्वि-त्वोत्पत्तिपक्षस्य बीभत्स्यतया वक्ष्यमाणरीत्या तत्स्वीकार एव लाघवात् युक्त इत्यभिप्रेत्य परिहरति नचेति ।

(एकत्वस्य स्वरूपातिरिक्तसंख्यात्वम्)

**ननु नैकत्वं संख्या, स्वरूपानतिरेकात् । अतः साधनविकलमुदाहरणम् ॥ मैवम् । संख्यैव सा ; द्रव्यान्तरेऽप्यनुवृत्तेः । यदि हि घटादेस्स्वरूपमेवैकत्वम् , ततो घट एकः, पट एक इति सर्वद्रव्यसाधारण्यमेकत्वस्य न स्यात् । न हि घटस्वरूपस्य पटस्वरूपेण संभवति सामानाधिकरण्यम् , घटः पट इति । अस्ति तु तत् एकत्वस्य ॥ किंच—**

**संख्यैकता[1] विरुद्धत्वात् द्विसंख्येवान्यसंख्यया ।**
**एकं द्वाविति न ह्यस्ति सामानाधिकरण्यधीः ॥ ३२ ॥**

(द्वित्वाद्ययावद्द्रव्यभावित्वसाधकभङ्गः)

**यत्तु—अनेकद्रव्यवृत्तित्वे सति गुणत्वात् संयोगवत् अयावद्द्रव्यभाविनी द्वित्वादि-संख्येति-तत् नानात्वेऽनैकान्तिकम् । न हि सतोरेव घटपटयोस्तन्नानात्वं नश्यति । न च तद् द्वि[त्व]संख्यैव ; त्रयाणां तदभावप्रसंगात् । न च तत् एकत्वाभावमात्रम् ; तुच्छस्यापि नानात्वापत्तेः ।** (द्वित्वादिप्रत्यक्षसार्वदिकत्वापत्तिपरिहारः)

**[2]आपेक्षिकत्वाद् द्वित्वादेः प्रतियोग्यनवग्रहात् ।**
**बुभुत्सोपरमाच्चापि सत्या एवानवग्रहः ॥ ३२ ॥**

**[3]अतश्चैतन्यस्यैवेन्द्रियद्वाराऽर्थसन्निकर्ष एव तद्भावाभावानुविधानोपपत्तिः ।**

(प्रकाशकत्वहेतुनापि ज्ञानार्थसंबन्धसाधनम्)

**अन्यच्च[4] अर्थस्य प्रकाशकं हि ज्ञानं भवताम् । सर्वश्च प्रकाशकं प्रकाश्यवस्तुसन्निकृष्टमेव प्रकाशकं दृष्टं दीपप्रभादि । अतस्तदपि तथेति युक्तमाश्रयितुम् ॥ [5]व्योमवदमूर्तस्य न क्रियावत्त्वमिति चेत्—केयं मूर्तिर्नाम, यद्विरहिणः क्रियाऽयोगः ? ।**

(ज्ञाने परिच्छिन्नद्रव्यत्वरूपमूर्तत्वाभावासिद्धिः)

**यदि पारिभाषिकी द्रव्यत्वे सति काचित्कतेति, इष्यत एव सा चैतन्ये ; न हि तत् सर्वगतं द्रव्यम् ; तथासति युगपत्सर्वार्थसिद्धिप्रसङ्गात् । काचित्कत्वे तु-तद्धि यदैकदा एकेन्द्रियेण संप्रयुक्त (संपृक्तं) तदर्थाभिमुखम् , न तदा इन्द्रियान्तरमधितिष्ठति । अत एव हि**

---

1. एकत्वं संख्या त्रित्वसंख्याविरुद्धत्वात् द्वित्वसंख्यावदित्यर्थः । ननु तर्हि प्रतिद्रव्यमेकत्वसत्त्वात् द्वित्वादि निराश्रयं स्यादित्यत्र विरोधमुत्तरार्धेनोपपादयति । 2. घटादौ द्वित्वस्य पटादिसापेक्षतया तदभावेऽनुत्पन्नत्वादेवाग्रहः ; उत्पन्नस्यापि, निरूपकान्तरस्य पटादेरग्रहादग्रहः ; पटादिग्रहकालेऽपि बुभुत्साविरहादग्रह इत्यर्थः। अपेक्षाबुद्धिः स्थितद्वित्वादिव्यञ्जिकेति तदभावे अग्रह इति भावः । 3. अतः संख्यादिनिदर्शनेन प्रत्यवस्थानायोगात् , इन्द्रियसन्निकर्षनिवृत्तौ ज्ञाननिवृत्त्यनापत्तेः । 4. एवं भाट्टप्राभाकरसंमतप्रकाशव्यवहारयोरप्यसंबन्धिन्यर्थेऽयोगात् संबन्धं प्रसाध्य प्रभावत्प्रकाशकत्वहेतुनापि तं साधयति । 5. 'अमूर्तस्याकाशस्येव निष्क्रमणप्रवेशाद्यनुपपत्तेः' इत्युक्तं निरसितुमनुवदति ।

युगपद्ज्ञानानुत्पत्तिः । निरतिशयवेगश्च तत्, युगपदिव अतिशीघ्रमनेकेन्द्रियाधिष्ठान-दर्शनात् । अतो यथोदितममूर्तत्वमसिद्धम् ॥

(अस्पर्शत्वरूपामूर्तत्वस्य शब्दमनसोरनैकान्त्यम्)

स्पर्शवत्ता मूर्तिः ; तद्विरहान्निष्क्रियत्वमिति चेत्—शब्देनानेकान्तः । स खलु शङ्ख-मुखादेर्दवीयसोऽपि [1]देशान्नोदनविशेषेण लोष्टादिरिव यावद्वेगं प्रतिष्ठते स्पर्शविहीनोऽपि । स्पर्शरहितस्यापि मनइन्द्रियस्य क्रियावत्त्वं [2]पदार्थवाक्यार्थविदामुभयेषामपि संमतमेव ॥

(अतीतादावपि चैतन्यसंप्रयोगसंभवः)

कथमतीतानागतयोरसतोश्चैतन्येन संप्रयोग इति चेत्-कथं वा विषयभावः, प्रकाश-मानत्वम् ; [3]संख्यादियोगो वा ? [4]तयोर्यस्तत्र निर्वाहः, स एवात्रास्तु । [5]अपिचातीतया अनागततया च तावप्यद्यापि विद्येते इति तेन रूपेण बोधसन्निकर्षे का(ना)नुपपत्तिः । किंच यथा दवीयसि देशे सता ध्रुवशिशुमारादिना दृक् तु सन्निकृष्यते, तथा दवीयसि काले सता कल्पाद्यन्तवर्तिना स्व(स्वा ?)यंभुवादिनेति [6]नालोकं किंचित् । किंच[7]—

नातीतानागते बुद्धेर्दूरे भवितुमर्हतः ।
बुद्धया प्रकाशमानत्वात् बुद्धिबोद्धृस्वरूपवत् ॥ ३४ ॥

(अन्तरालाग्रहणोपपत्तिः)

एवञ्च चैतन्यस्य निरतिशयवेगितया अन्तरालदेशकालाग्रहणाभिमानोऽलातचक्र-[8]गतक्रमवद्देशसंयोगविभागाग्रहणाभिमानवत् । अपिचेन्द्रियलिङ्गसंस्कारादेर्यदर्थप्रतिनियतं रूपम्, तेनैवोपश्लिष्य निस्सरच्चैतन्यमपि [9]तद्गोचरेणैव सन्निकृष्यते ; यथा गवादिपद-शक्तिरेकबुद्धिसिद्धेऽपि [10]सामान्यविशेषात्मके वस्तुनि सामान्यांशेनैव सम्बध्यते ; यथा वा विधिः प्राप्तांशपरिहारेणाप्राप्तांशमेव भावनायाः स्पृशति[11] । अतः इन्द्रियादिद्वारेण चैतन्य-मपि तदर्थाभिमुखं निर्गच्छतीति न्याय्यम्[12] । यथाऽऽह भगवान्, 'तदस्य हरति प्रज्ञां

---

1. देशादित्यत्र दशां, दिशामिति पाठद्वयं न्यायसिद्धाञ्जनव्याख्याने । 2. वैशेषिकमीमांसकानाम् । 3. वर्तमानापेक्षाबुद्धिजन्यद्वित्वादियोगः । 4. अतीतानागतयोः । तत्र विषयभावादौ । 5. सिद्धान्ते सर्वस्यापि द्रव्यस्य नित्यत्वादतीतत्वाद्याश्रयद्रव्यं वर्तमानमेवेति संयोगः सूपपन्न इति तात्त्विकं समधि-माह । 6. न लोकानुभवापेतम् । 7. बुद्ध्यपेक्षया दवीयस्त्वमेव नेति साधयति किञ्चेति । 8. अलात-चक्रगतानां क्रमिकाणां देशविशेषसंबन्धिनां संयोगविभागानां वस्तुतो ग्रहणसत्त्वेऽप्यग्रहणाभिमानवत् । ९. तेनार्थेन । यदिति पृथक्पदञ्चेत्, तद्रूपस्य गोचरेणेत्यर्थः । 10. जातिव्यक्त्यात्मके । 11. दध्ना जुहोतीत्यत्र हि दधिहोमोभयविशिष्टभावनान्वयिनो विधेर्दधिरूपे भावनाया अंशे संबन्धः । अत एव हि तदेव विधेयमुच्यते । 12. यदा करणायत्तश्चैतन्यप्रसरः, तदा करणव्यापारोपलक्षित करणयोग्यार्थ-सन्निकर्ष एव चैतन्यस्य, ग्रहणपदार्थ इत्याशयः ।

वायुर्नावमिवाम्भसि' इति । मनुश्च—

'इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य[1] क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥ २-९९ ॥' इति ।

(चैतन्ये गुणत्वप्रयुक्तपूर्वपक्षनिरासः)

यत्तु[2] गुणश्चैतन्यं गुणिनमपहाय कथमन्यतो यातीति—तदयुक्तम्, प्रहाणानभ्युपगमात् । अप्रहायैवात्मानम् इतस्ततश्चेतना इन्द्रियादिद्वारान्निश्चरति । विच्छिन्नायाश्च तस्याः सन्धानासम्भवः शास्त्र एवोक्तः । दृश्यन्ते च गुणा[3] अपि शब्दगन्धसूर्यालोकरत्नप्रभादयो गतिमन्तः धर्म्यतिवर्तिनश्च । अतिसूक्ष्मो[4] दूरगमनधर्मा भौतिको हि शब्दः ।

(शब्दस्य गुरुमतनित्यत्वविभुत्वगगनीयत्वनिरासः)

[5]ननु नभ इव विभुः शब्दो व्यञ्जकध्वनिवशेन प्रादेशिक इव गत्वर[6] इव चोपलभ्यते । तथाहि-शब्दस्सर्वव्यापी एकद्रव्यवर्तित्वे सति आकाशगुणत्वात् तत्परिमाणवत्—मैवम्, अतद्गुणत्वात् । वायवीयः शब्दः ; तेन नियतसहोत्पत्तिकत्वात् तदीयस्पर्शवत् । यश्च येन द्रव्येण नियतसहोत्पत्तिर्गुणः, स तद्गुण एव, यथा तथाविधाः रूपादयः। नियतसहोत्पत्तिश्च वायुना शब्दः, उभयोरपि भेरीदण्ड-वंशदलनादिसंयोगविभागजत्वनियमात् । [7]उत्पद्यते च शब्दः ; इन्द्रियग्राह्यत्वे सति गुणत्वात् गन्धादिवत् । कृतकश्च ; क्रियोत्तरमेवोपलभ्यत्वात् संयोगादिवत् । न चाभिव्यञ्जकत्वं प्रयत्नादेः कल्प्यम् ; गौरवात् । तत्प्रतीतिकारणत्वकल्पनैव हि लघ्वी । अभिव्यञ्जकाश्चैकदेशावस्थितान्[8] एकेन्द्रियग्राह्यान् युगपदभिव्यञ्जन्ति ; यथा प्रदीपो रूपसंख्यापरिमाणानि [9]करकादींश्चैकप्रदेशवर्तिनः । [10]नचैवं ताल्वादिसंयोग-

---

1. अस्य नरस्य तदिन्द्रियद्वारा प्रज्ञा निस्सरति । क्षरतिशब्दो ह्ययं पूर्ववन्निस्सरणार्थक एव । 2. पूर्वकृतं चोद्यं निरस्यति यत्त्विति । 3. गुणत्वमत्यन्तपरतन्त्रत्वम् । तच्चाद्रव्यकतिपयद्रव्यसाधारणम् । तत्राद्रव्ये शब्दादौ, द्रव्ये आलोकादौ च गतिमत्त्वम्, यदीयत्वेनास्य प्रसिद्धिः, तद्धर्म्यनुपलम्भदेशेपि सत्त्वरूपं धर्म्यतिवर्तित्वञ्चानुभविके ; शब्दगन्धयोर्भेरीपुष्पानुपलम्भदेशेपि सत्त्वात् । परन्तु तत्र शब्दगन्धयोरद्रव्यत्वात् गतिमत्त्वदेशान्तरस्थत्वयोस्साक्षादयोगात् द्रव्यद्वारा तत्स्वीकारः। आलोकादेस्तु द्रव्यत्वात् साक्षादेव। प्रकृते चाणोरात्मनो देहान्तरेव स्थितेश्चितेः शब्दादिवद्गुणत्वे गत्याद्यनुपपत्तावप्यालोकादिवद्गुणत्वेष्टौ न कश्चिद्दोष इति भावः । एतदर्थज्ञापनायैतावद्दृष्टान्तकथनम् । 4. ननु कथं शब्दो गुणः ; तथात्वेपि भेरीगुणस्य किन्द्रव्यद्वारा गतिमत्त्वादि सूपपादमित्यत्राऽऽरभते अतीति। भेर्यादिजनितो वायुगुणः शब्दो वायुद्वारैव गत्यादिमानिति विशिष्टार्थः । 5. पूर्ववाक्येन शब्दस्य भाट्टमतनित्यविभुद्रव्यत्वनिरासं सूचयित्वा गुरुमतं गगनगुणत्वे सति नित्यविभुत्वं निरसितुमाह । 6. नभोगुणतया द्रव्यद्वारापि गत्युपपादनायोगादेवमुक्तम् । 7. असिद्धिपरिहाराय हेतुघटकमुत्पत्त्यंशं साधयति । कृतकः क्रियाजन्यः। 8. मिथस्समानाधिकरणान् । 9. कमण्डल्वादीन् । 10. कादिव्य-

विभागजनितपवन इति नासौ व्यञ्जकः ।

नित्यत्ववादिनः [1]शब्दा निर्भागव्योमवर्तिनः ।
श्रावणाश्चेत्यभिव्यक्तिनियमे नास्ति कारणम् ॥ ३५ ॥
देशैक्ये ग्राहकैक्ये च व्यञ्जकैक्यं हि दर्शितम् ।
तदभावात् प्रयत्नोत्थमारुतः कारणं [2]ध्वनेः ॥ ३६ ॥
अत एव च नानात्वं प्रत्युच्चारणमिष्यताम् ।
कृतस्य करणायोगात् हेतुपौष्कल्यभेदतः ॥ ३७ ॥
किंचोदात्तानुदात्तत्वदीर्घत्वह्रस्वतादयः ।
गादिस्था युगपद्भान्तो न भिन्द्युः स्वाश्रयान् कथम् ॥ ३८ ॥
स्थानैक्यायातसादृश्यात् प्रत्यभिज्ञाऽपि नैकपतः ।
प्रदीपप्रत्यभिज्ञेव ज्ञापिता भेदहेतवः ॥ ३९ ॥

(विना संबन्धं व्यवहारानुगुण्यवादः प्राभाकरीयः)

[3]नन्वेवं चैतन्यसंयोगः संयोगजो वा कश्चित् प्रकाशः प्राप्तः। उभयमपि तत् न चैतन्ये संभवति ; भेदापेक्षत्वात् संबन्धस्य । आत्मनोऽपि न चैतन्येन संयोगः ; तद्धर्मित्वात् । न हि धर्मधर्मिणोः संबन्धः संयोगः । समवायो हि सः, अयुतसिद्धसंबन्धत्वात् । संयोगस्तु पृथक्सिद्धयोर्द्रव्ययोः क्रियानिमित्ता प्राप्तिः, [4]अकार्यकारणयोर्वा तयोर्निरन्तरस्थितिः । चैतन्यसंयोगसमवाययोरन्यतरस्य, संबन्धमात्रस्य वा प्रकाशत्वे ज्ञातृज्ञानज्ञेयशरीरेन्द्रियेष्वव्याप्त्यतिव्याप्ती यथायोगमादर्शयितव्ये । तत्त्वान्तर[5]प्रकाशाभ्युपगमस्त्वनुपलब्धिबाधितो न दूषणान्तरं प्रयोजयति । अतो [6]यद्व्यवहारोदयानुगुणं ज्ञानम्, तत् प्रकाशत इत्येवाभ्युपगमो युक्तः। [7]त्रितयव्यवहारानुगुण्यं संविदस्तु स्वभाव इति अपर्यनुयोज्यं निमित्तवैरूप्यम् । न हि स्वभावाः पर्यनुयोगमर्हन्ति । एवञ्चेत् सं(श्चैतत्सं ?) योगसमवायविरहिणोऽपि पदार्थस्य निमित्त[8]भेदानुसारेण व्यवहारहेतुस्संविदिति युक्तमाश्रयितुम् ।

---

ञ्जकेन गाद्यव्यञ्जनात् । 1. प्राभाकरस्य । 2. शब्दसामान्यं ध्वनिः । 3 एतावता प्रयत्नादेरनभिव्यञ्जकत्वादुत्पादकत्वात् वायुगुणः शब्दस्तद्द्वारैव गत्यादिमानिति सिद्धं शब्दसूर्यालोकादिनयाच्चैतन्यस्य गत्यादिमत्त्वमिति ज्ञानार्थयोस्संबन्धो निराबाध इत्युपपादितम् । एवमर्थविषये उक्तस्य संबन्धस्य वित्तौ वेदितरि च दुर्वचतया संबन्धस्वीकारेऽपि वैरूप्यमस्त्येवेति संबन्धं विना स्वभावत एव प्रतिनियतप्रकाशकत्वं वित्तेरस्त्विति प्राभाकरः शङ्कते नन्विति । 4. अवयवावयविभिन्नद्रव्ययोः ; विभुनोः । 5. प्राकठ्यमेव तत्त्वान्तरम् । 6. यस्य वस्तुनो व्यवहारेत्यर्थः । तत् वस्तु । 7. नन्वानुगुण्यमेव केन निमित्तेनेत्यत्राह त्रितयेति । 8. घटवित्तेः पटव्यवहाराजनकत्वं कुत इत्यत इदमुक्तम् ।

(तदुक्तप्रकारानुपपत्तिः)

उच्यते । उक्तमत्र न निमित्तकारणमनुरुध्य कार्यं स्वकार्यमारभत इति । व्यवहारानुगुणसंवेदनत्वेऽपि [1]प्रकाशपदार्थे प्रवृत्तिनिवृत्ति (निमित्त ?) भेदो दुष्परिहर एव । बहुव्रीहिसमासाश्रयणे संविदन्तराभावेन तस्यां तदभावप्रसङ्गात् । कर्मधारयाश्रयणे ज्ञातृज्ञेययोरसंवेदनत्वेनाप्रकाशप्रसङ्गः ; व्यवहारोदयानुगुण्यश्च व्यवहारतोऽनन्तव्यम् ; ततः प्रागेव च भवति [2]विदितत्वप्रतीतिः व्या(व्यव)हारश्च ।

(सिद्धान्तसंमतः प्रकाशपदार्थः)

यद्येवं, कस्तर्हि 'प्रकाशते'पदार्थः । न हि निरवद्यमेकरूपं ज्ञातृज्ञेयज्ञानानुगतं तमुपलभामहे-उच्यते-नूनं भवानश्रुतपूर्वी प्रथमाधिकरणस्य[3] न्यायतत्त्वे । अभिहितं हि तत्रेदमनुभवे स्मृतिमुपपादयद्भिः, 'अनुभवादूरत्वं स्मृतिनिमित्तम्' इति । [4]एतदुक्तं भवति—संविददूरत्वं प्रकाश इति । (अदूरविकल्पेन दूषणं तत्परिहारश्च)

आह—किमिदमदूर इति ? दूरादन्यस्तद्विरुद्धस्तदभावो[5] वा ? तथा विशेषणमुपलक्षणं वा, सदूर इति ? विशेषणत्वे पक्षत्रयेऽपि नियमेन संवेदनदूरत्वानुसंधानपूर्विकया प्रकाश इति प्रतीत्या भवितव्यम् । न च तथाऽस्ति । उपलक्षणत्वे [6]स्वरूपान्तरं वाच्यम् । न च तदवगम्यत इत्युक्तम्—उच्यते । अलमस्थाने संभ्रमेण ।

---

1. तादृशसंवेदनत्वं प्रकाशः ; तद्वत्त्वं प्रकाशमानत्वम् । 2. विदितत्वं वित्त्यधीनव्यवहर्तुराहत्वमिति मते हीदं द्वयं न घटते । सिद्धान्ते तु वित्तिसंयुक्तत्वं विदितत्वमिति न दोषः । 3. ना 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति वार्तिकप्रवृत्तौ 'प्रथमाधिकरणे' इति सप्तमी स्यात् । पूर्वशब्द-श्रवणात् 'इष्टादिभ्यश्च' इत्येतदप्रसक्तया क्तान्तस्येन्प्रकृतित्वाभावात् तदप्रवृत्तौ च 'कर्तृकर्मणोः कृति' इति कृद्ग्रहणात् 'सपूर्वाच्च' इति विहिततद्धितान्तेऽत्र षष्ठी न स्यात्, किन्तु 'कृतपूर्वी कटम्' इतिवत् द्वितीयैवेति कथं षष्ठी ? उच्यते-कृतीत्यस्य कृदर्थोपसर्जनीभूतक्रियान्वये इत्यर्थः ; न तु वृत्त्यनन्तर्गत-कृदन्तयोग इत्यर्थः, भक्ष्याणां पाकशालेत्यादौ षष्ठ्यनापत्त्या द्वितीयापत्तेः । पृथक्प्रयोगार्हकृदन्तयोगे इत्यर्थोऽपि न ; कृतपूर्वमिति भावविवक्षया पृथगप्रयोगे मानाभावेन कटमिति द्वितीयानापत्तेः । अत इह कृदर्थोपसर्जनक्रियान्वयविवक्षया षष्ठी । तद्धितार्थोपसर्जनक्रियान्वये तु न षष्ठी । सा च क्रिया कृदाद्युपात्ता, तद्धितलक्षिता वेत्यन्यदेतत् । अतः षष्ठीद्वितीयान्तप्रयोगद्वयोपपत्तिः । किञ्चेह शेषषष्ठ्या न कश्चिदपवाद इति निरवद्यम् । 4. स्मृतेरनुभूतानुभवोभयगोचरत्वात् तैरुक्तमदूरत्वरूपनिमित्तमुभय-साधारणमभिमतमिति स्वस्मिन्नपि संविददूरत्वरूपप्रकाशस्तत्रेष्ट इति सिद्ध्यतीति । 5. 'तदन्य तद्विरुद्ध-तदभावेषु नञ्' इति स्मृतिः । 6. ज्ञाप्यबहिर्भूतस्यैवोपलक्षणतया, ज्ञाप्यस्य प्रकाशस्य प्रतीतौ दूरविरोधित्वादिरूपस्याविषयत्वे उपलक्ष्येण रूपान्तरेणैव प्रकाशस्य विषयत्वं वाच्यमिति भावः ।

[1]भवत्वनुभवादूरं दूरादन्यत् विरोधि वा ।
तद्भावश्च प्रकाशत्वं (शोऽत्र) किमत्र बहु जल्प्यते ॥ ४० ॥

[2]प्रकाशत इति प्रतिभासोऽपि बुद्धिविप्रकर्षप्रत्यनीकबोधतत्संसृष्टपदार्थस्वरूपविमर्श एव, बाह्यप्रकाशवत् । तत्रापि ह्यालोके तद्व्याप्तभूभागादौ च प्रकटादिप्रख्योपाख्ये आलोकादूरत्वनिमित्ते । यथा च तत्र तन्निमित्ता सन्तमसनिवृत्तिः, एवमिहापि ज्ञानादूरत्वनिमित्ता अज्ञाननिवृत्तिः । अत एव चानुभूते अनुभवे चोत्तरकाल (लं ?) तुल्यवत्स्मरणम् ।

(संबन्धविशेषनिष्कर्षः)

[3]एवंच चैतन्यसंबन्धविशेषविषयविकल्पोऽप्यलब्धावकाश इति निरनुयोज्यानुयोग एव । नैरन्तर्यपदपर्यायमत्यन्तसामीप्यमात्रश्च संयोगः । स एव परतन्त्राश्रितः समवायपदपरिभाषाभूमिर्वैशेषिकाणामिति नार्थान्तरत्वमूरी(ररी)कृत्य विकल्पः संभवति । [4]यथा च

---

1. घटादिकमनुभवादूरमित्यत्राभावरूपार्थपक्षेऽनन्वयात् तमुपेक्ष्याऽऽह ॥ '**प्रकाशत्वं** प्रकाशमानत्वम् । प्रकाशोऽत्रेति पाठस्समीचीनः' इति न्यायसिद्धाञ्जनव्याख्या । 2 विशेषणत्वे न किञ्चिद्बाधकम्। स्वरूपत्वात् उपलक्षणत्वेपि प्रकाशमानवस्तुस्वरूपमेव रूपान्तरमिति भावः। 3. अदूरत्वमप्यन्ततः किं संयोगः समवायो वा, भावातिरिक्ताभावाभावादित्यत्राह **एवञ्चे**ति । 4. रूपरूप्यादौ स्वरूपमेव संबन्धः। पृथक्स्थितयोर्द्रव्ययोः संयोगो द्रव्यातिरिक्तः क्लृप्तः । तदत्रापृथक्सिद्धयोर्द्रव्ययोश्शरीरात्मभूतयोरन्यादृशयोर्वा संबन्धः स्वरूपं वा संयोगो वेति विमर्शे धर्म्यतिरिक्तसंबन्धानर्हे अद्रव्ये स्वरसतो नैरन्तर्यबुद्ध्यभावात् द्रव्ये च भावाद्विभुद्वयसंयोगवत् संयोगः स्वीकारमर्हति । अतो ज्ञानज्ञात्रोरप्यस्तु संयोगः। वैशेषिकास्त्वेवमपृथक्सिद्धद्रव्यसंबन्धं समवायं परिभाषमाणास्तुल्यनयात् परतन्त्रस्थले सर्वत्र समवायमकल्पयन् । वस्तुतोऽद्रव्ये स्वरूपातिरिक्तसंबन्धाभावात् समवायः परतन्त्रद्रव्यसंयोग एवेति । एवञ्च संविददूरत्वमनुयोगित्वप्रतियोगित्वान्यतरसंबन्धेन संवित्संयोगवत्त्वम् । इदं संविद्यप्यक्षतम् । अस्य च संयोगस्य नियमेन ज्ञानभास्यत्वात्, अहं जानामि, ज्ञातोऽयमर्थ इति विशिष्टव्यवहार इति ॥ 1. ननु-ईदृशज्ञानसंबन्धस्य प्रकाशपदार्थत्वे संबन्धस्य संबन्ध्यधीनतयाऽऽत्मप्रकाशस्य ज्ञानाधीनत्वापत्तिः । किञ्च ज्ञानपदेन अवस्थापन्नज्ञानग्रहणे स्वापे आत्मनोऽप्रकाशापत्तिः । सामान्यतो ज्ञानद्रव्यग्रहणे स्वापेपि धर्मभूतज्ञानप्रकाशापत्तिः । न चेष्टापत्तिः ; अद्वैतनिरसनावसरे तदा संविदप्रकाशस्योक्तत्वात् । विषयप्रकाशनवेलायामिति च **भाष्यम्** । एवं ज्ञानस्य कृत्स्नदेहादिव्यापितया तत्सर्वांशप्रकाशापत्तिः ; संयुक्ताश्रितत्वरूपसंबन्धबलात् रूपादेरिव सर्वात्मधर्मप्रकाशापत्तिश्च । अतो नायं प्रकाशपदार्थः-इत्याशङ्कायाम्—प्रकाशपदं व्यवहारक्षमत्वार्थकमेवास्तु । स चोक्तानुमानादिवशादात्मनि स्वतः ; अवस्थाविशेषविशिष्टज्ञानमात्रे स्वरूप-आत्मसंबन्धोभयबलात् ; घटादौ तु ज्ञानादूरत्वप्रयुक्तः, अन्यथा विषयनियमायोगात् । अदूरत्वे सत्यपि क्वचित् तादृशप्रकाशाभावः प्रतिबन्धादिना । एवञ्च घटमहं जानामीत्यादाववस्थापन्नज्ञानक्रियाजन्यसंयोगरूपफलाश्रयत्वादेव कर्मत्वम् । आत्मनि तु न तादृशक्रियाजन्यः संयोगः, किन्तु नित्यः । अनुमानादिनाऽऽत्मग्रहणे च प्रसरणावस्थज्ञानेन जन्योऽपि

[4]संयोगान्तर्भावः समवायस्य, तथा संबन्धविमर्शे दर्शयिष्यामः ॥ [1]ज्ञानादूरत्वप्रयुक्तो व्यवहारक्षमतालक्षणो वा परः (?) प्रकाशः । स च सत्यपि स्वनिमित्तपौष्कल्ये प्रतिबन्धात् योग्यताविरहाद्वा व्यापित्वासंगित्वाद्यात्मधर्मान्तरेषु देहेन्द्रियादौ च न संजायते, चक्षुस्सन्निकृष्ट इव कालिन्दीपयसि [2]रूपरसादयः (दिषु ?) ।

अतो [3]यथोक्तनीत्याऽऽत्मा स्वतश्चैतन्यविग्रहः ।
हा (भा ?) (ज्ञा ?) नस्वभाव एवान्यत् करणैः प्रतिपद्यते ॥ ४१ ॥

(पूर्वपक्ष्युक्तसुखादिदृष्टान्तप्रतिक्षेपः)

यत्तु सुखादिनिदर्शनेनाऽऽत्मविशेषगुणतया चितेरागन्तुकत्वमापादितम्, तदपि गुणवृत्तापरिज्ञानेन ; यतः—

स्वरूपोपाधयो धर्मा यावदाश्रयभाविनः ।
नैवं[4] सुखादि बोधस्तु स्वरूपोपाधिरात्मनः ॥ ४२ ॥

यथा च बोधोपाधिरात्मभावः, तथोपपादितम् । सुखदुःखे च (वा) नात्मधर्मौ, इन्द्रियसौष्ठवनाशयोरेव तद्भावोपपादनात् ; [5]व्याकरिष्यते चैतत् अन्तिमपदार्थसमर्थनावसर

---

स इष्यते । अवस्थाविशेषेत्युक्त्या न तदनापन्नज्ञानस्य स्वप्रकाशत्वाद्यापत्तिरित्याद्याशङ्क्याह **ज्ञाने**ति । ज्ञानं प्रति अदूरत्वं व्यवधायकराहित्यम् । तत् कार्यैकोन्नेयं पूर्वकर्माधीनम् । अत एव दूरस्थस्य ग्रहणेऽपि मध्यगतस्याग्रहणम् । अत्र पूर्वं **वर**मिति स्थाने **पर**मिति, अत्र पर इति च दर्शनादुत्कृष्टार्थको वरशब्दतुल्यः परशब्दः स्यात् । सर्वानुगत इत्यर्थको वेह ; परजातिरितिवत् । अन्यार्थ एव वा ; तदा **परो वा ज्ञानादूरत्वेत्येवं** योजना । 2. वास्तवशुक्लरूपेत्यर्थः ; चक्षुषा नीलस्य ग्रहणात् । 3 प्रकाशनित्यत्वस्वाभाविकत्वसाधकप्रयोगद्वयेन । उत्तरार्धान्वये तु स्वरूपोपाधिधर्मत्वरूपोक्तहेतुनेत्यर्थः। विग्रहशब्दस्वारस्यात् पूर्वं चैतन्यस्वरूपत्वोक्त्यवगमात् स्वभावपदबलेन च धर्मभूतज्ञानाविवक्षाप्रतीते**र्ज्ञाने**ति पठनं युक्तम् । 4. सुखादि न स्वरूपोपाधिभूतमित्यर्थः । 5. ननु स्वतस्सुखीत्यात्मनि सुखमुक्तवता कथमनात्मधर्मत्वमुच्यत इत्यत्राह **व्ये**ति । अयं भावः—तत्रात्मगतस्वाभाविकानुकूल्यप्रकाशरूपं सुखमात्मनीष्टम् । भवदुक्तसुखदुःखयोश्च नात्मस्वरूपप्रयुक्तत्वम्, प्रकृतिसंसर्गकृतकर्ममूलत्वात् । न च भगवद्विभूतित्वप्रयुक्तं वास्तवमानुकूल्यं प्रकाशते ; किन्तु सौन्दर्यादिकृतं कल्पितमिति सुखस्य दुःखात् अविशेषः । एतावता साधनवैकल्यं कथमिति चेत्—अत्रायमर्थः — स्वतस्सुखीत्यात्मनि सुखं वक्ष्यते । ग्रन्थारम्भे च आनुकूल्यप्रतिलब्धानन्दसुखादिव्यपदेशबोधविशेष एवेति सुखस्य ज्ञानरूपत्वमुक्तम् । तुल्यनयात् प्रतिकूलं ज्ञानं दुःखमिति च सिद्धम् । अतो घटादिज्ञानस्येवानयोरपि चितिरूपतया दृष्टान्तत्वमेवासिद्धम् । सर्वत्रावस्थांशे आगन्तुकत्वस्याविशिष्टत्वात् चितिशब्दवाच्यविशेष्यांश एव तद्वार्यते । तदेतद्दृष्टान्तासिद्धिपरिहाराय ज्ञानातिरिक्तसुखदुःखयोरेव त्वयेहोपादानं वाच्यम् । यद्येवं ज्ञानातिरिक्ते सुखदुःखपदप्रसिद्धिर्मन्यते, तर्हि श्रुत्यादिविरोधितार्किकादिप्रसिद्धेरुपेक्ष्यतया इन्द्रियसौष्ठवादिकमेव सुखादीति ।

इति साधनविकलता च निदर्शनस्य । रागद्वेषादयोऽपि मनोवस्थाविशेषाः न साक्षादात्मगुणाः । विज्ञायते हि, 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' इति । गीयते च, 'इच्छा द्वेषस्सुखं दुःखम्' इति ।

(सिद्धान्तिमतं शरीरलक्षणम्)

"[1]चेतनाधृतिः" इति क्षेत्रलक्षणमैकपद्येन । चेतनया ध्रियमाणः संघातो हि देहः । स्ववृत्त्य(धृत्य ?)नुगुणचैतन्यमात्रादेव प्रवर्तमानं क्षेत्रमिति यावत् । अत एव ह्यन्तर्यामिब्राह्मणे, 'यस्य पृथिवी शरीरं' ; 'यस्यापश्शरीरं' ; 'यस्यात्मा शरीरम्' इत्यादिनिर्देशः। "तानि सर्वाणि तद्वपुः" इति च पुराणे ।

(श्रुत्यन्तरविरोधादेतद्धीशब्दस्यार्थान्तरपरत्वम्)

किमिदं धीरिति ? उत्प्रेक्षाभिप्रायं तत् ; न ज्ञप्तिविषयम् ; तस्याः स्वाभाविकत्वस्य तस्यामेव श्रुतौ श्रूयमाणत्वात् । श्रूयते हि, 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति, 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात्' इति च । ज्ञातुरविनाशित्वादेव ज्ञानस्याविनाशमुपपादयन्तीयं श्रुतिर्ज्ञातुस्स्वरूपप्रयुक्तं ज्ञानमिति दर्शयति । न च [2]दृष्टिविशेषणतया द्रष्टुरुपादानमिति सांप्रतम् ; पुंलिङ्गनिर्देशविरोधात् । हेतोश्च साध्यसमत्वापत्तेः। द्रष्टुः स्वरूपनिर्देशपरत्वेपि दृष्टिपदस्य, असमाधेयमहेतुत्वम् ; [3]स्वपक्षहानिश्च । आत्मनस्तु नित्यत्वमप्रचाल्यम(त्वा)नेकन्यायागमसिद्धं युक्तं हेतुतया व्यपदेष्टुम् । न हि सति पदार्थे तत्स्वरूपोपाधयो न भवितुमर्हन्ति, सति कनक इव पैङ्गल्यम् , प्रभेव च प्रदीपे । तेनायमर्थः—आत्मस्वभावभूतायाश्चितेर्बाह्याभ्यन्तरविषयविशेषसंबन्धप्रकारप्राप्तदृष्टिघ्रातिरसयतिवक्ति[4]श्रुतिमतिस्पृष्टिविज्ञातिव्यपदेशभेदायाः स्वात्मावभासिन्याः संसारापवर्गावस्थयोर्न जातुचिद्विपरिलोपो विद्यत इति । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः

---

एवं रागादिकमपि ज्ञानातिरिक्तं त्वया निदर्श्यमानं मनोगुण एवेति । इदमुक्तं भवति-प्राकृतं सुखदुःखेच्छादिकं मुक्तिकालासंभवि ; अत एवात्मस्वरूपाप्रयुक्तं नात्मविशेषगुणः। आत्मनि तत्तद्व्यवहारस्तु तत्तद्गोचरज्ञानविशेषस्यापि तत्तच्छब्दार्थत्वविवक्षया । स्वरूपप्रयुक्तं तु मुक्तिकालभावि इच्छासुखादिकं केवलज्ञानावस्थाविशेष एव । अत एव द्विविधेप्यर्थे सुखादिपदशक्तौ मानाभावादलत्यं सुखादिपदं पूर्वोक्तधीपदनयेन नेयार्थम् । एवमपि ज्ञानातिरिक्तसुखादिपदार्थाऽऽग्रहे श्रुत्याद्यनुसारिणीत्थमेव व्यवस्थेति ।

1. एवं सुखादेः क्षेत्रान्तर्भाववचनादनात्मधर्मत्वे अत एव चेतनारूपपक्षेपि हेत्वसिद्धिस्स्यादित्यत्र चेतनाधृतिरिति समस्तमेकं पदमन्यार्थकमित्याह । 2. द्रष्टात्मिका दृष्टिरिति दृष्टिपदस्यात्मपरत्वं निरस्यति नचेति । 3. तार्किकादिमते आत्मनो जडत्वात् ; अद्वैतिमते चाहमर्थस्य विनाशित्वात् । 4. वक्तिरिह शाब्दबोधः । श्रुतिः शब्दग्रहणम् ।

कृत्स्नो रसघन एव, एवं वा अरे अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः,' तथा, 'स्वेन भासा स्वेन ज्योतिषा', 'आत्मज्योतिस्सम्राडिति होवाच' इति । तथाऽपवर्गदशाया-मेवच्छन्दोगाः, 'न पश्यो मृत्युं पश्यति, न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति' [इति?], 'नोपजनं स्मरन्' इति ; 'स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते' इति च । अन्याश्च, 'जानात्येवायं पुरुषः ; ज्ञातव्यं तु न वेद' इत्याद्याः सकलकरणो-परमदशायामप्यात्मनः प्रबोधमभिदधानाः श्रुतयो बोधस्वभावतामस्य द्रढयन्ति । 'निर्वाणमय एवाय(ह)मात्मा ज्ञानमयोऽमलः' इत्यादि च पुराणे । 'ज्योतिषामपि तज्ज्योतिः' इत्यादि इतिहासे । भगवान् शौनकश्च—

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥" इति ॥

अत एव हि सूत्रकारश्च, 'ज्ञोऽत एव' इति ॥

(अनित्यगोचरनिश्चयसंशयादिव्यवहारनिर्वाहः)

[1]तदेवमात्मस्वभावभूतस्य चैतन्यस्य विषयसंश्लेषविशेषेषु निश्चयसंशयादिव्यवहार-भेदः, [2]तत्तद्विशेषभाजि चैतन्ये वा । चैतन्यस्य विषयेण दृढसंयोगो हि निश्चयः ; तस्यैव बहुभिर्युगपददृढसंयोगः संशयः, ज्ञानवासनानुसारेण संश्लेषः स्मरणमित्यादिः। उक्तश्च 'आत्म-धर्मस्य चैतन्यस्य विषयेण संयोगो ज्ञानमित्युच्यते' इति । नचैवं[3] संयोगस्योभयाश्रित त्वेन विषयस्यापि ज्ञातृत्वप्रसंगः ; विषयेण[4] संयोगाभावात् । चैतन्येन हि तस्य संयोगः ; [5]बाह्यप्रकाशवत् । यथा खल्वालोकसम्बन्धेऽपि प्रकाशे सूर्यादेरेव प्रकाशकत्वम्, न घटादेः। अथ सूर्यादितन्त्रत्वादालोकस्य स एव तद्धर्मी तत्सम्बन्धेनार्थान्तरस्य प्रकाश [क] इत्यु-च्यते, इहापि तर्हि चैतन्यस्यात्मधर्मत्वात् तेनार्थान्तरं स्पृशन् स एव जानातीत्युपपद्यते ॥

---

1. तदेवं पूर्वार्धं विवृत्य नानापदार्थसंसर्गादित्युत्तरार्धं विवृणोति । अनेन पूर्वपक्ष्युक्तः इन्द्रियलिङ्गादेर्ज्ञापकत्वायोगो वारितः । 2. अयमेव सिद्धान्तः, घटादिपदस्येव निश्चयादिपदस्या-वस्थाविशेषापन्नधर्मिपर्यन्ते प्रसिद्धेः । 3. एवं—संयोग एव निश्चयादिरिति पक्षे । 4. न हि स्वनिरूपितस्संयोगस्स्वस्मिन्निति भावः । 5. धर्मभूतज्ञानस्य ज्ञातृत्वापत्तिमात्मनस्तदनापत्तिञ्च वारयितुं दृष्टान्तमाह । प्रकाशस्याऽऽन्तरस्य बाह्यो दृष्टान्तः। जानातीति व्यवहारः प्रकाशयतीति व्यवहारेण तुल्यः, न तु प्रकाशत इत्यनेनेति भावः । अनेन पूर्वपक्ष्युक्तोऽनुभवविरोधोऽपि शमितः ।

तत् सिद्धं चैतन्यस्वभाव एवायमात्मा आत्मानं विदन्नेवास्ते ; अन्यत्तु निमित्तभेदानुसारेण जानाति, न जानाति चेति ।

(स्वप्रकाशेऽप्यात्मन्यागमाद्यावश्यकता)

तदेवं चैतन्यस्वभावः परिस्फुरन्नप्ययमात्मा गम्भीरजलाशयचरमीनवत् जलसंसृष्टक्षीरवच्च न विविच्य स्फुटं चकास्तीति तदुपपादनन्यायानुगताः पूर्वानुमानभेदाः वचनानि चाद्रियन्ते । तैरप्यपरितुष्यन्तो यमनियमादियोगाङ्गानुष्ठानक्षपिताशुद्ध्यावरणमलाः निरोधाभ्यासपुटपाकनिर्धूतरजस्तमःकलङ्कसत्त्वोद्रेकसमुत्थ[1]स्वेतरसकलविषयवैलक्षण्यापरोक्ष[2]ज्ञानाय प्रयतन्ते । भावनाप्रकर्षपर्यन्ते चापरोक्षज्ञानमुदयत इति सर्ववादिनिर्विवादमिति न तदुपपादनायाद्य प्रयत्यते । एवमात्मा स्वतस्सिध्यन् आगमेनानुमानतः ।
योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाश्यते ॥ ४३ ॥

(आत्मनित्यत्वसाधनारम्भः)

अथास्य कालावच्छेदपरीक्षा । (क्षणिकत्वशङ्का)

[3]तत्र सुगतमतानुसारिणः सन्मात्रानुबन्धिनीं क्षणिकतामाचक्षाणा नित्यात्मदर्शनमेव सर्वानर्थमूलं मन्यमानाः क्षणभङ्गिनमेनं संगिरन्ते, यत् सत् तत् क्षणिकम् ; संश्चायमात्मेति ॥ कथं पुनः सन्मात्रानुबन्धिनी क्षणिकता ॥ अक्षणिकस्य सत्तानुपपत्तेः। यन्न कस्मैचित् कार्याय, अन्ततः सार्वज्ञ्यविज्ञानगोचरत्वायापि न प्रभवति—न तस्य सद्भावः संभाव्यत इत्यर्थक्रियाकारितैव सत्ता भावानाम् । न च सा स्वव्यापकभूतक्रमयौगपद्यविरहिण्यक्षणिके संभविनीति अन्यत्र निरवकाशतया क्षणिकतयैवानुबध्यते[4] ॥ कथं पुनः क्रमयौगपद्ययोरर्थक्रियाव्यापकत्वम् ? कथं वा तयोरक्षणिकान्निवृत्तिः ? श्रूयताम्—

[5]अर्थक्रियासु भावानां कर्तृत्वस्य द्वयी गतिः। क्रमेण युगपद्वेति न विधान्तरसंभवः ॥ ४४ ॥

[6]भावाभाववत् अनयोरन्यतरनिवृत्तावन्यतरव्यवस्थानादर्थक्रियाजनने भावानां न तृतीयप्रकारसंभव इति क्रमाक्रमप्रतिबद्धैवार्थक्रिया । [7]न चाक्षणिके क्रमयौगपद्ये संभवतः[8] ॥ श्रीः ॥

.... .... .... .... *-*-* .... .... .... ....

---

1. स्वशब्दः प्रयतमानात्मपरः । 2. वैलक्षण्यस्यापरोक्षज्ञानायेति विग्रहः । 3. एतावता 'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः' इति विवृतम् ; अथोत्तरार्धे प्रथमनिर्दिष्टं नित्यत्वं परीक्षितुमारभ्य प्रागुक्तकल्पेषु प्रथमं सौगतपक्षं प्रस्तौति । 4. क्षणिकत्वव्याप्या भवतीत्यर्थः । क्षणिकत्वव्याप्यव्याप्यतया तद्व्याप्यत्वम् । 5. प्रथमप्रश्नं समाधत्ते । 6. घट-घटाभावादिवत् । तदुक्तम् 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' (न्या०.कु० ३ ) इति । 7. द्वितीयं प्रश्नं समाधातुमाह ॥

8. अत्रात्मसिद्धिग्रन्थेपि ग्रन्थान्तरवत् विनष्ट एव भागोऽधिकः ; प्रतिज्ञातबह्वर्थप्रथमांशैकदेशगोचरत्वादुपलभ्यमानस्येति ॥ श्रीगुरुभ्यो नमः ।

॥ श्रीः ॥

श्री भगवद्यामुनमुनये नमः

# ईश्वरसिद्धिः

[1]तत्र कस्यचिदेकस्य वशे विश्वं प्रवर्तते ।
इति साधयितुं पूर्वं पूर्वपक्षं प्रचक्ष्महे ॥ १ ॥

तत्र मीमांसकाः प्राहुः—नायं सर्वार्थदर्शनशक्तिसंपन्नः पुरुषोऽभ्युपगममर्हति ; अतिपतितसकलसाधकप्रमाणसंभावनाभूमित्वात्, [2]स्फुटविविधबाधकत्वाच्च । तथाहि—अस्य प्रत्यक्षमन्यद्वा साधकं भवेत् ; प्रत्यक्षमपि लौकिकं यौगिकं वा ।

(लौकिकप्रत्यक्षस्येश्वरासाधकत्वम्)

व्यवस्थितमितस्वार्थं[3] न तावदिह लौकिकम् ।

---

॥ श्रीः ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

## गूढप्रकाशः

1. अयं ग्रन्थ आत्मचिन्ताग्रन्थादर्वाचीनः, न संवित्सिद्धिवत् प्राचीनः, अत्र 'देहान्तरप्रापक....उपपादितमात्मचिन्तायाम्' इति वक्ष्यमाणत्वात् । अत्रात्मसिद्धावित्यनुक्त्वा आत्मचिन्तायामित्युक्तिरस्य ग्रन्थस्यात्मसिद्ध्यन्तर्गतत्वपक्षमुपष्टभ्नातीव । निर्विवादपारम्परिकप्रसिद्धिप्रामाण्यात्त्वयं ततोऽन्य एव ग्रन्थः। करिष्यमाणैतदीश्वरसिद्धिग्रन्थविवक्षितार्थस्यैत एव द्रष्टव्यतामुपदिश्य अभिसंधाय वाऽन्यांशमात्रचिन्तनेन तं ग्रन्थं समाप्य संगृहीतांशविशेषे विस्तरायायं ग्रन्थ इति पक्षान्तरञ्च प्रागेवावाचि । मन्ये इष्टसिद्धि-नैष्कर्म्यसिद्धि-ब्रह्मसिद्धिरूपप्राक्तनाद्वैतग्रन्थत्रयप्रतिभटभूतमिदं सिद्धित्रयमिति । आस्तामेतत् । अत्र मङ्गलश्लोकाभावात् अथेत्यादिपदं विना तत्रेतिप्रयोगाच्चैतद्ग्रन्थोपक्रमभागोऽपि कश्चिन्नष्टस्स्यात् । अत्र **'पूर्वपक्षं प्रचक्ष्महे'**, इत्युपक्रान्तपूर्वपक्षसमाप्तिः **अत्र ब्रूम** इति कारिकातःप्रागेव चेत्-ईश्वरस्यानुमानिकत्वं सिद्धान्तितं भवेत् । **श्रीभाष्य**शास्त्रयोनित्वाधिकरणे त्वयमीश्वरसिद्धिग्रन्थभागःस्पष्टमक्षरशोऽपि पूर्वपक्षमध्ये निक्षिप्त इति, तत्रत्यसिद्धान्तग्रन्थोऽप्येतत्सिद्धान्तभागसंग्रह इत्यवसीयते । अत्रापि मीमांसकेन, 'तत्खल्वनुमानमागमो वे'त्यागमोपि विकल्पमध्ये प्रवेशितः । न च, **अत्र ब्रूम** इत्यतः प्राक्तदुपपादनमस्ति । अतः प्रथमं सर्वप्रमाणविरहप्रतिज्ञापूर्वकं मीमांसकेन प्रत्यक्षस्यासाधनत्वोक्तिः, तार्किकेणानुमानप्रस्तावः, मीमांसकेन तद्दूषणम्' पुनस्तार्किकेण अत्र ब्रूम इति तत्प्रतिविधानम्, भूयो मीमांसकादिना तन्निरास आगमनिरासश्च, अथागमप्रामाण्यग्रन्थवदिहापि श्रौतीमीश्वरसिद्धिमादत्यानुमानप्रत्यक्षयोः पश्चादवसरवर्णनमिति रीतिर्विभाव्यते । **प्राभाकरा** अपीश्वरानुमानिकतामेव निराकुर्वन्ति । उक्तञ्च **प्रभाकरविजये,** 'आनुमानिकत्वमेवेश्वरस्य निराकृतम्....तत्समर्थनञ्च वेदान्तमीमांसायाम्' इति । तथा **नयविवेके**ऽपि । 2. बहुव्रीहिः । 3. कतिपयस्वयोग्यार्थमात्रनियतम् ।

साधनं तेन सर्वार्थतज्ज्ञानादेरसिद्धितः ॥ २ ॥

सर्वार्थदर्शनशक्तिशालिनमवगमयन्तो(ता ?) हि [1]देशकालस्वभावविप्रकर्षव्यवधानजुषः सर्व एवार्थास्तद्दर्शनं शक्तिश्च गोचरयितव्यानि । न च [2]विद्यमानेन्द्रियसन्निकर्षयोग्यकतिपयविषयनियतवृत्तेर्लौकिकप्रत्यक्षस्य निरवधिरयं महिमा संभावनाभूमिरिति कथमिव तदिह साधनमिति मन्येमहि ।

( योगिप्रत्यक्षसामान्यस्यासाधकत्वम् )

नापि योगिप्रत्यक्षमस्य साधकम् ; यतः—

प्रत्यक्षत्वे तदप्येवं[3] विद्यमानैकगोचरम् ।
भूतादिगोचरं नैव (वा न) प्रत्यक्षं [4]प्रतिभादिवत् ॥ ३ ॥

तत् खलु योगिविज्ञानमैन्द्रियकं न वा । ऐन्द्रियकमपि बहिरिन्द्रियसंभवमान्तरकरण जनितं वा । बहिरिन्द्रियाणि तावत् समधिगतनिजविषयसन्निकर्षसहकारीणि[5] तद्गोचरज्ञानजननानीति जगति विदितम् । अतो न रसनादिभिर[6]जातातिवृत्तव्यवहितादिसकलविषयवेदनप्रसंगः । न चाविद्यमानैः रजताभिरसंभवति सन्निकर्षः ; तस्य द्व्याश्रयत्वादाश्रयाभावे तदसंभवात् । अतः अपेक्षितोऽर्थसन्निकर्षः सहकारिविरहे (अपेक्षितार्थसन्निकर्षसहकारिविरहे ?) कथमिन्द्रियाण्यतीतादिविषयसाक्षात्काराय कल्पेरन् ? भवति च—यत् यत्सहकारि यत्कार्यजननं, तत् तदभावे न तज्जनयति ; यथा क्षितिसलिलसहकारि अङ्कुरकार्यजननबीजं क्षित्याद्यभावेऽङ्कुरम् । अर्थसन्निकर्षसहकारीणि बहिरिन्द्रियाणि ज्ञानजननानीति तान्यपि नातीतेऽनागते वाऽर्थे ज्ञानं जनयन्तीति न तदुपजनितं प्रत्यक्षं यथोक्तविषयनियममतिक्रामति । नाप्यान्तरकरणसंभवम्, आन्तरगोचर एव सुखादौ स्वान्तस्वातन्त्र्यात् । बाह्यविषयमितिषु च मनसो निरंकुशकरणताङ्गीकारे हि कृतं चक्षुरादिभिः । अतश्च न कश्चिदन्धो बधिरो वा भवेत् । भवति चात्र—विमतिपदं मनो बहिरिन्द्रियनिरपेक्षं न बाह्यप्रत्यक्षगोचरे प्रवर्तते, तत्र तत्तन्त्रवृत्तित्वात् । यत् यत्र यत्तन्त्रवृत्ति, न तत् तन्निरपेक्षं तत्र प्रवर्तते, यथा आलोकावेक्षप्रवृत्ति चक्षुः स्वगोचरे[7] अन्धतमस इति ।

---

1. देशादीनां विप्रकर्षः । देशस्य विप्रकर्षः दूरस्थता । कालस्य पकर्षः अतीतत्वादिः । **स्वभाव विप्रकर्षो** मिथोविरोधः । 2. विद्यमानः सन्निकर्षो येषामिति बहुव्रीहिः । 3. अतोऽसर्वग्राहित्वान्न सर्वज्ञत्वविशिष्टग्राहीति । 4. इन्द्रियलिङ्गादिप्रसिद्धकारणाभावेऽप्यर्थविशेषस्य कारणविशेषात्प्रतिनियतं भानं प्रतिभा । अत्र 'प्रतिभाति हि' 'प्रतिभाति यत्, इत्यपि पाठः । योगिप्रत्यक्षातिरिक्ततया आर्षं प्रातिभं ज्ञानं **प्रशस्तपादभाष्ये** भाषितम् । 5. सहकारिपदान्तं सर्वमत्र बहुव्रीहिवृत्तम् । 6. **अजातातिवृत्तेति** । अनागतातीतेत्यर्थः । 7. स्वविषये घटादौ ।

( सिद्धिसंस्कृतस्याप्यक्षस्यासाधकत्वम् )

न [1]च-सिद्धौषधमन्त्रतपस्समाधिमहिमसमासादितातिशयानीन्द्रियाणि कदाचित् अपजहति समधिगतविषयनियममिति संभवति ; सांसिद्धिकसामर्थ्याविर्भावैकफलत्वात् तेषाम् ; सामर्थ्यस्य च प्रतिनियमात् । न खलु सुप्रयुक्तमेषजशतविहितसंस्कारमपि श्रोत्रं रूपरसविभागावगमाय कल्पते । भवति च-विवादाध्यासितबाह्याभ्यन्तरकरणपाटवातिशयः अनुल्लङ्घितसीमा ऐन्द्रियकप्रकर्षत्वात् दृश्यमानतत्प्रकर्षवत् । इत्यैन्द्रियकं ज्ञानं नातीतादि गोचरयति । ( ध्यानजप्रत्यक्षस्यासाधकत्वम् )

भावनाप्रकर्षपर्यन्तजन्मनस्तु सत्यपि विशदनिर्भासित्वे प्राच्यानुभवगोचरात् [2]अनधिकमधिकं वाऽध्यवस्यतः स्मृतिविभ्रमस्रोतसोरन्यतरावर्तपरिवर्तिनः कुतः प्रामाण्यकूलप्रतिलम्भः ; कुतस्तरां च प्रत्यक्षतयोत्तम्भनम् ; प्रत्यक्षस्य वा सतः कथमिव विदितविषयनियमव्यतिक्रमः ; अतिक्रामतो वा कुतः प्रत्यक्षत्वमिति न विश्वानुभवैश्वर्यशालिनि प्रत्यक्षं प्रमाणम् । ( प्रत्यक्षातिरिक्तस्याप्यसाधकत्वम् )

नापि प्रमाणान्तरम् । तत् खल्वनुमानमागमो वा । अनुमानमपि विशेषतोदृष्टं सामान्यतोदृष्टं वा । तत्र सकलपदवीदवीयसि भगवति न तावत् [3]स्वलक्षणसाक्षात्कारपूर्वकाविनाभावावधारणाधीनोदयत्वादिद(त्वादाद्य?)मनुमानमुदेतुमलम् । न ह्यनवगतचरहुतभुजस्तदविनाभावितया धूममनुसंधातुमीशते । न च सर्वार्थनिर्माण[4]साक्षात्कारपटीयसि लिङ्गं सामान्यतोदृष्टमपि किंचन लभ्यते ॥ (तार्किकवादः)

नन्वेकचेतनाधीनं विवादाध्यासितं जगत् ।
अचेतनेनाऽऽरब्धत्वादरोगस्वशरीरवत् ॥ ४ ॥
तथा सर्वार्थनिर्माणसाक्षात्करणकौशलम् ।
कार्यत्वादेव जगतस्तत्कर्तुरनुमीयताम् ॥ ५ ॥

सर्वं हि कार्यमुपादानोपकरणसंप्रदानप्रयोजनसंवेदिचेतनरचितमवगतं घटमणिकगृहादि । कार्यञ्च विमतिपदमवनिगिरिमहार्णवादीति तदपि तथाविधबुद्धिमद्धेतुकमध्यवसीयते । न च कार्यत्वमसिद्धमिति वाच्यम् —अवयवसन्निवेशादिभिर्हेतुभिस्तत्सिद्धेः । इह चान्त्यावयविभ्यः प्रभृति आद्व्यणुकमखिलमवयवि[5] क्रमनिहीयमाननानावयवव्यति-

1. न च संभवतीत्यन्वयः । 2. अनुभूतमात्रगोचरत्वे स्मृतित्वम् ; अधिकगोचरत्वे च विभ्रमत्वं भ्रान्तित्वमिति प्रामाण्यस्यैवाभावे तदवान्तरप्रत्यक्षप्रमाणत्वं कथमिति । 3. सिसाधयिषितव्यक्तिगोचर (प्राक्कालिक) साक्षात्कारेत्यर्थः। 4. निर्माणे साक्षात्कारे च । सामान्यतोदृष्टं हि व्याप्तिग्रहोपयुक्तदृष्टान्तगतव्यक्त्यनुगतसामान्याकारमात्रेण वस्तु साधयेत् ; न त्वभिमतं सर्वविलक्षणाकारविशिष्टकर्तारमिति भावः । 5. अवयवीति जनितमिति च दृष्टान्ते हेतुसाध्यान्वयप्रदर्शनम् । अत्र "एषा च दिक् क्रमेणान्त्यावय

पङ्गविशेषजनितमवगतमिति अन्यत[1] उपादानं चतुर्विधाः परमाणवः प्रपञ्चस्य । तेषामादि-परिस्पन्दश्च तदनुगुणादृष्टविशिष्टतत्तत्क्षेत्रज्ञसंयोगासमवायिकारणक इति उपकरणमपि समस्त-क्षेत्रज्ञवर्तीनि धर्माधर्मलक्षणानि अदृष्टानि । प्रयोजनं पुनस्तदभिनिर्वर्तितविचित्रार्थक्रिया[2]ऽऽ-कारश्चेतनोपकारप्रकारभेदोऽपर्यन्तः । तदुपभुञ्जन्त एव क्षेत्रज्ञाः संप्रदानम् । न चामी स्वसम वायिनावपि धर्माधर्मौ अलमवलोकयितुमिति तदतिरेकी निखिलभुवननिर्माणनिपुणोऽधि-करण[3]सिद्धान्तसमधिगतनिरतिशयसहजसकलविषयसंविदैश्वर्यशक्त्यतिशयः पुरुषधौरेयकः (रेय एकः ?) किमिति न सामान्यतोदृष्टलिङ्गादनुमीयते ?

(मीमांसकेन तार्किकदूषणम्)

तदिदमविदितानुमानवृत्तस्य स्वमतिरचिततरलतर्कोल्लसितमिति परिहसन्ति मीमांसकाः ।

तथाहि—किमिदमेकचेतनाधीनत्वं नाम अभिप्रेतं [4]तनुभुवनादेः ?

तदायत्तत्वमिति चेत्—

किमस्य तस्मिन्नायत्तं किन्नु जन्माथवा स्थितिः ।
प्रवृत्तिर्वाऽऽद्ययोस्तावत् साध्यहीनं निदर्शनम् ॥ ६ ॥

न खलु शरीरमेकचेतनाधीनोत्पत्तिस्थिति । ये हि यद्देहाधीनसुखदुःखोपभोग-भागिनः, भवति हि तदुचितादृष्टशालिनां सर्वेषामेव तेषां तद्देहिन इव तदुत्पत्तिस्थिति-निमित्तत्वम् । अपिच शरीरावयविनः स्वावयवसमवायलक्षणा स्थितिरवयवव्यतिषङ्गविशे-षात् ऋते न चेतयितारं परमपेक्षते । या पुनस्तदपेक्षिणी प्राणनलक्षणा स्थितिः, न सा पक्षी-कृते क्षित्यादौ संभवतीति स्थितिमपि नैकरूपां पक्षसपक्षानुयायिनीमुदीक्षामहे । एकचेत-नाधीनप्रवृत्तित्वे तु प्रबलबहुजनसंरम्भसप्रयत्नप्रचाल्यैरुपलतरुरथादिभिर्व्यभिचारः । [5]आ-रब्धत्वादेव चैतत्साध्यसिद्धौ अधिकमिदमुपादानविशेषवचनम् ।

---

विभ्योऽवतरन्ती आद्व्यणुकमवतिष्ठते'' इति प्रकरणपञ्चिकावचनं स्मार्यते । 1. द्व्यणुकादिकं त्वान्तरालिक-मुपादानम् । 2. अर्थक्रिया–कार्यमिति यावत् । 3. 'यत्सिद्धावन्यप्रकरणसिद्धिः सोधिकरणसिद्धान्तः' (न्याय द० १-१-३०) । 'यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते ; न तैर्विना सोऽर्थः सिध्यति ; तेऽर्थाः यदधि-ष्ठानाः; सोऽधिकरणसिद्धान्तः' इति न्यायभाष्यम् । न हि सहजसार्वज्ञ्याभावे सर्वपक्षीकारेण प्रवृत्तं सिध्य-तीति । इदमेवानुमानस्थले पक्षधर्मताबलमित्युच्यते । यदाह, 'पक्षधर्मतयाऽधिकरणसिद्धान्तापरपर्यायया' इति । (**नयवि० पु० १८१**) । 4. 'तरुभुवनादिकं सर्वं सावयवमवसीयते । यच्च नाम सावयवं तत् अवयवव्यतिषङ्गबलसमासादितात्मलाभम्' इति पञ्चिका (७.प्र.) । अतोऽत्र ग्रन्थे श्रीभाष्ये चेह सर्वत्र तनुशब्दस्तरुशब्दो वेति विमृश्यमिति चेत्–न तनुशब्दोऽनुपपन्नः न्यायवार्तिकतात्पर्यटीकायां (४-१-२१) 'तनुतरुमहीधर,' 'तरुमहीधर', 'तनुभुवनादि' इति नानारूपप्रयोगदर्शनात् । 5. हेतुकोटाव चेतनरूपोपादानविशेषोक्तिर्व्यर्थेति व्याप्यत्वासिद्धिमाह **आरब्धत्वादिति** ।

(सिद्धसाधनवचनम् )

चेतनाधीनता[1]मात्रसाधने सिद्धसाध्यता ।
चेतनैर्भोक्तृभिर्भोग्यः कर्मभिर्जन्यते हि नः ॥ ७ ॥

युक्तश्चैतत्, यत्—उभयवादिसिद्धानामेव चेतनानां कर्तृत्वाभ्युपगमः[2]; लाघवात् । न च उपादानाद्यनभिज्ञतया तत्प्रतिक्षेपः ।

उपादानं पृथिव्यादि[3] यागदानादि साधनम् ।
साक्षात्कर्तुं क्षमन्ते यत् सर्व एव च चेतनाः ॥ ८ ॥

अद्यवदेव विश्वम्भरादयः क्रमप्राप्तागन्तुकोपचयापचयैकदेशशालिनो न युगपदेव निरवशेषविलयजननभागिन इति अन्तिमपरमाणुसाक्षात्कारो न कर्तृभावोपयोगी ।

कर्मणः शक्तिरूपं यत् अपूर्वादिपदास्पदम् ।
मा भूत् प्रत्यक्षता तस्य शक्तिम[4]द्ध्यक्षगोचरः ॥ ९ ॥

न खलु कुलालादयः कुम्भादिकार्यमारभमाणास्तदुपादानोपकरणभूतमृद्दण्डचक्रादिकार्योत्पादनशक्तिं साक्षात्कृत्य तत्तदारभन्ते । यदिपरं[5] शक्तिमविदुषामभिलषितसाधने तदुपादानादिव्यवहारोऽनुपपन्नः । इह तु—आगमादवगम्यन्ते विचित्राः कर्मशक्तयः ।
तेन कर्मभिरात्मानः सर्वं निर्मिमतां[6] पृथक् ॥ १० ॥

(शक्यक्रियत्वाद्युपाधिवचनम् )

अपिच तदेव चेतनकर्तृकं जगति परिदृश्यते, यदेव शक्यक्रियं शक्यज्ञानोपादानादि च ; न च तथा महीमहीधरमहार्णवादि इति कथमिव तत् तत्कार्यत्वम्[7] (र्यम् ?) ; कथन्तराञ्च तदुपादानोपकरणादेरसाक्षात्कारगोचरता ? यादृशं हि कार्यमुपादानाद्यभिज्ञपूर्वकमवगतं घटमणिकादि, तादृशमेव हि तथाविधबुद्धिमद्धेतुकत्वानुमानाय प्रभवतीति ।

(हेतोर्विरुद्धत्वम्)

अपिचानीश्वरेण परिमितशक्तिज्ञानेन विग्रहवता अनवाप्तकामेन कृतमवगतं घटादि-

---

1 उपलादौ व्यभिचारपरिहाराय एकैकांशत्यागे इत्यर्थः । 2. इतीति शेषः । 3. न तु परमाणवः । न कदाचिदनीदृशं जगदिति पृथिव्यादेस्सदा स्थितेः ; सृष्टिप्रलयविषये बाधकसत्त्वात् मानाभावाच्च (न्या.कु. २-स्त) । 4. शक्तिमद्वस्तु अक्षगोचरो हि ; तदलमिति । 5. यदिपरं—परन्तु । 6. निर्मान्तु । 7. कार्यत्वमिति पाठे अनुभवेदित्येवं क्रियापदं स्थितं स्यात् । कार्यत्वसाध्यकत्वे शक्यक्रियत्वमुपाधिः, चेतनाधिष्ठितत्वसाध्यकत्वे शक्यज्ञानत्वमुपाधिरिति **नयविवेके** (१९४) **प्राभाकरविजये** (८२, ७९) च । अत्र चेतनकर्तृकत्वे साध्ये उभयमुपाधिरुच्यते ।

कार्यमिति तथाविधं चोद्धारमुपस्थापयन् हेतुरभिमतपुरुषसार्वज्ञ्यसर्वैश्वर्यादिविपर्ययसाधनात् विरुद्धस्स्यात् । न चैवं सति सर्वानुमानव्यवहारोच्छेदप्रसङ्गः शङ्कितव्यः । प्रमाणान्तरगोचरे हि लिङ्गिनि लिङ्गबलादापततो विपरीतविशेषांस्तत्प्रमाणमेव प्रतिरुणद्धि । इह पुनरति-पतितसकलमानान्तरकर्मभावे सर्वनिर्माणनिपुणे सिसाधयिषिते यावन्तोऽन्वयव्यतिरेका वधारिताविनाभावभाजो धर्मास्तानव्यविशेषेणोपस्थापयति ।

(सत्प्रतिपक्षितत्वम्)

अपिच[1]— स्वार्थकारुण्यभावेन व्याप्ताः प्रेक्षावतः क्रियाः ।
ईश्वरस्योभयाभावाज्जगत्सर्गो न युज्यते ॥ ११ ॥

अवाप्तकामत्वान्न तावत् आत्मार्थे सृजति ; प्रलयसमये प्रलीनसकलकरणकलेबरादि-भोगोपकरणतया च चेतनानां दुःखाभावात् दुःखिदर्शनजनितकृपाप्रयुक्तिरपि नास्तीति व्यापकभूतस्वार्थकारुण्यनिवृत्तेर्व्याप्यभूतया प्रेक्षावत्प्रवृत्त्यापि निवर्तितव्यम् ।

सुखैकतानं जनयेज्जगत् करुणया सृजन् ।
तत्कर्मानुविधायित्वे हीयेतास्य स्वतन्त्रता ॥ १२ ॥

(अनेकान्तत्वम्)

न [2]चोपादानादिसाक्षात्कारिण एव कर्तृत्वमित्यपि नियमः; उपादानमुपकरणञ्चाविदुष एवाऽऽत्मनो ज्ञानादिषु कर्तृत्वात् । (मीमांसकमतोपसंहारः)

अतः—[3]असिद्धत्वात् विरुद्धत्वादनैकान्त्याच्च वर्णितात् ।
कार्यत्वहेतोर्जगतो न यथोदितकर्तृता[4] (?) ॥ १३ ॥

प्रयोगश्च भवति-महीमहीधरादि कार्यं न भवति, प्रसिद्धकार्यविलक्षणत्वात् गगनवत् ; अशक्यदर्शनोपादानोपकरणत्वाद्वा, व्यतिरेकेण घटादिवत् । परमाणवो न प्रत्यक्षाः निरतिशयसूक्ष्मद्रव्यत्वात्, तथैव घटादिवत् । विमतिविषयः कालो न लोकशून्यः, कालत्वात् इदानीन्तनकालवत् । तनुभुवनादि ईश्वरकर्तृकं न भवति, कार्यत्वात् तद्वदेव । ईश्वरः कर्ता न भवति, प्रयोजनरहितत्वात् अशरीरत्वाद्वा मुक्तात्मवदिति ॥

---

1. जगन्न प्रेक्षावत्कर्तृकं स्वप्रयोजनकारुण्यान्यतराप्रयोज्यत्वादिति सत्प्रतिपक्षमाह । 2. न हि-ज्ञानसुखादिकं कुतोत्पद्यते, उपकरणञ्च किमिति विविच्य पश्चाद्ज्ञानादिसंपादने यतन्ते ।

3. अनेन स्वरूपासिद्धिर्विशिष्टसाध्यासिद्धिश्चोक्ते । एतदुपपादनं **प्रयोगश्चे**त्यादिना । 4. यथोदितं कर्तृत्वं न जगन्निरूपितमित्यर्थः। अतोऽबहुव्रीहितया न 'नद्यृतश्च' इति कप् । 'जगती न यथोदितकर्तृका' इति वा पाठः ।

(तार्किकसमाधानम्)

**अत्र[1] ब्रूमो न कार्यत्वं क्षित्यादौ शक्यनिह्नवम् ।**
**[2]सभागत्वात् क्रियावत्त्वान्महत्त्वेन[3] विशेषितात् ॥ १४ ॥**
**[4]तादृशादेव मूर्तत्वात् बाह्य[5]प्रत्यक्षताऽन्वितात् ।**
**ससामान्यविशेषत्वादित्यादिभ्यो घटादिवत् ॥ १५ ॥**

**नचेदृश एव सन्निवेशः कार्यः, नेतरः इत्यवयवसन्निवेशविशेषप्रतिनियतं रूपभेदमुदीक्षामहे ।**

(पूर्वोक्तोपाधिनिरासः)

**यत्तु—शक्यक्रियं शक्यज्ञानोपादानोपकरणञ्च क्रियत इति-तदस्तु नाम । किन्तु ते क्रियाज्ञानशक्ती[6] क्रियाज्ञानाभ्यामेव समधिगमनीये; ते च क्षित्यादिषु यथोक्तसाधनबलसमुपस्थापिते इति न विशेषः[7] प्रसिद्धप्राकारगोपुरादिकार्येभ्यः तनुभुवनादेः । नचैतावानेव क्रियागोचर इति विषयनियमः कश्चित् क्रियाया दृष्टः; येनेदमशक्यक्रियमध्यवस्येम । सिद्धे[8]**

---

1. मीमांसकप्रत्युक्तिं तार्किकः प्रतिक्षिपन् आनुमानिकत्वं समर्थयते ॥ पञ्चिकान्यायग्रन्थाऽऽगमप्रामाण्येष्विवात्रापि **कार्यत्वमुत्पत्तिमत्त्वम्** ; तस्यैवाऽऽदितस्साधनदूषणयोः प्रवृत्तत्वाच्च । श्रुतप्रकाशिकाकृतश्रीभाष्ययोजनान्तररीत्येह कृतिसाध्यत्वरूपकार्यत्वपरताऽपि भाव्या । सावयवत्वेन कृतिसाध्यत्वानुमानं **न्यायरत्नाकरे** । सावयवत्वेनोत्पत्तिमत्त्वाद्यनुमाय ततस्तदनुमानमन्यत्र । 2. सावयवत्वात् । 3. महत्त्वे सति क्रियावत्त्वात् । 4. महत्त्वे सति मूर्तत्वात् । 5. बहिरिन्द्रियजप्रत्यक्षविषयत्वे सति सामान्यविशेषवत्त्वात् । **सामान्यविशेषपदं** व्याप्यजात्यर्थकं प्राचीनवैशेषिकप्रसिद्धम् । तन्मात्रोक्तौ मनसि व्यभिचारात् सत्यन्तम् । आत्मनि व्यभिचारात् बाह्येति । सामान्यादावपि भावपदार्थे सदिति व्यवहारात् यथाकथञ्चित्सत्तारूपसामान्याधारत्वसत्त्वात् व्यभिचाराद्विशेषेति । न खलु तत्र सदितिव्यवहारवत् द्रव्यमित्यादिव्यवहारोस्ति, येन विशेषाधारत्वमपि तत्र शङ्क्येतेति । सामन्यादौ जात्यतिरिक्तयत्किञ्चिद्विशेषसत्त्वात् स एव दोष इति जातिरूपविशेषग्रहणाय सामान्येति । विशेषो नाम व्यावृत्तो धर्मः । **प्रतिनियतं**-घटादौ व्यवस्थितं क्षित्यादिव्यावृत्तम् । ननु पक्षे सिध्यतु हेतुः, चेतनकर्तृकत्वे साध्ये पूर्वं शक्यक्रियत्वादिरुपाधिरुक्त इत्यसिद्ध्यन्तरमस्तीत्यत्राह **यत्त्विति** । **क्रियते** कृत्या साध्यते । 6. कर्तुं शक्यत्वं ज्ञातुं शक्यत्वञ्च । **ते च** क्रियाज्ञाने च । तत्साधकहेतोस्सुतरां तद्व्यापकसाधकत्वमिति साध्यतुल्यत्वान्नोपाधित्वम् । साध्यं हि हेतुना साध्यमानं स्वव्यापककोडीकारेणैव सिद्ध्यतीति । नचैवमयोगोलके धूमसाधने आर्द्रेन्धनसंयोगस्यापि नोपाधित्वम्; मानान्तरेण तद्बाधनिश्चयेन विशेषादिति भावः । 7. अशक्यक्रियत्वादिरूपो विशेषो न । 8. अत्र उपाधिदोषस्य सर्वथैवायोगात् कार्यत्वस्वरूपासिद्धिदोष एव चिन्तनीयः ; स च वारित एवेति कार्थकरमेवानुमानम् । क्षित्यादेरपि कार्यतया परमाणुपर्यन्तोपादानसिद्धौ तत्साक्षात्कारस्यास्मदाद्यवृत्तेः साधनादित्याह **सिद्ध**

च कार्यत्वे तदुपादानादिसाक्षात्करण-तदधिष्ठान-तत्प्रेरणनिपुणः पुरुषविशेषः सिद्ध्यत्येव ।

(उक्ताधिष्ठानादिस्वरूपशोधनम्)

अधिष्ठानञ्च तत्प्रवृत्त्यनुगुणसंकल्पवदीश्वरसन्निकर्षः, क्षेत्रज्ञेनेव स्वशरीरादौ । स च द्रव्यैस्संयोगलक्षणः, तद्गुणैस्तु संयुक्तसमवायरूपः । प्रवृत्तिश्च परमाणूनां परिस्पन्दलक्षणा । धर्माधर्मयोस्तु[1] फलोदयानुकूलता [ता?]दृशदेशकालादिसहकारिसहितता । (?) ताभ्यां धर्माधर्माभ्यामेव फलम्, चेतनानधिष्ठितानां सर्वेषामेतेषा[2]मचैतन्येनाकिञ्चित्करत्वात् । न हि चेतनेन वर्धकिनाऽनधिष्ठिता वासी देशकालादिसहकारिशतसमधिगमेऽपि यूपादीनि आपादयितुमलम् । बीजाङ्कुरा[3]दयस्तु पक्षान्तर्भूता इति तैर्व्यभिचारवचनमनभिज्ञतयैव श्रोत्रियाणाम् । एतेन[1] सुखादिभिर्व्यभिचारोऽपि प्रत्युक्तः ।

(क्षेत्रज्ञेषु तदयोगः)

नचोभयवादिसिद्धतामात्रेण क्षेत्रज्ञानामेवेदृशाधिष्ठातृत्वकल्पनमुचितम्, तेषां सूक्ष्म-

---

इति । पूर्वोक्तं चेतनाधीनत्वस्वरूपविकल्पदूषणमपि न स्यास्यति, चेतनाधीनत्वस्य चेतनाधिष्ठितप्रेरितोपादानादिजन्यत्वरूपत्वादिति दर्शयितुं **तदधिष्ठाने**त्यादि उक्तम् ।

१. **धर्माधर्मयोः प्रवृत्ति**रित्यनुषंगः । प्रवृत्तिः फलाभिमुख्यम्; तच्च निरुच्यमानरूपम् । **तादृशे**ति चेतनाधिष्ठितेत्यर्थकम्। **ताभ्याम्** उक्तरूपेण स्वसाक्षात्कारिचेतनाधिष्ठिताभ्याम्। **ताभ्या**मित्यत्र 'नाभ्याम्' इति स्यान्न वेत्यपि चिन्त्यम् । आभ्यामेव न फलमित्यर्थः । **तादृशे**त्यत्र तादृशतादृशेति क्वचित्पाठः। सर्वत्र शब्दप्रक्षेपबहुले कोशे, 'धर्माधर्मयोः फलोदयानुकूलता ; सा च तादृशदेशकालादिसहकारिसमवहितता । ताभ्यां धर्माधर्माभ्यामेव फलं चेतनाधिष्ठिताभ्याम् ; सर्वेषामेतेषाम्' इत्येवमस्ति । प्रकृतग्रन्थखण्डस्य पञ्चिकाग्रन्थस्त्वेवम्, 'प्रवृत्तिरपि कीदृशी ? ....फलदानमिति चेन्न—देशकालावस्थादिसहकारिसहिताभ्यामेव फलम् । न चेतनव्यापारापेक्षम्' इति । एतदर्थपरं किञ्चेत्यादिश्रीभाष्यम् । २. धर्माधर्मदेशकालादीनाम् ॥ ननूपर्यचेतनत्वहेतुना चेतनाधिष्ठितत्वं सर्वेषां पृथग्वक्ष्यत इति किमिति कार्यत्वहेतुप्रस्तावमध्ये तदुक्तिः । किञ्चोपकरणपदेन धर्माधर्मग्रहणे तयोः कुलालाद्यनधिष्ठितत्वात् दृष्टान्ते साध्यवैकल्यम् ॥ उच्यते—साध्यकोटौ सामान्यत उपकरणेत्येव निवेशाद्दृष्टान्ते यथासंभवं ग्रहणम् ; पक्षे तु धर्मादिकमपि सुग्रहमिति गमयितुं पृथग्वक्ष्यमाणानुमानसिद्धार्थस्यैवेह प्रतिबोधनमिति । ३. **बीजेत्या**दि **सिद्धे**रित्यन्तं वाक्यजातं प्रधानप्रकृतकार्यत्वहेतुकप्रयोगविषयकं संभवानुरोधादवान्तरप्रकृताचेतनत्वहेतुकगोचरमपीष्यते । 'तथाच प्राङ्गणनिकटवर्तिदूर्वाङ्कुरादिष्वनवसितपुरुषव्यापारजन्मसु अनेकान्तः' इति अकृष्टजातवस्त्वभिप्रायम**प्रामाण्यम्** । अचेतनत्वहेतुः कार्यत्वहेतुश्च न बीजेऽङ्कुरे च व्यभिचरितः ; तस्यापि पक्षत्वादिति भावः। १. ननु पुरुषापेक्षत्वमात्रसाधनमुचितम् ; न प्रवृत्त्यनुगुणसंकल्पादेरपि । न हि पुरुषापेक्षमपि ज्ञानसुखादि स्वोपादानादिसाक्षात्काराधिष्ठानाद्यपेक्षम् । अतस्सुखमनधिष्ठितोपादानजन्यमेव, स्वयमनधिष्ठितमेव पुलकादिजनकञ्चेत्यत्राह **एतेने**ति ।

व्यवहितादिदर्शनाशक्तेर्निश्चितत्वात् । दृष्टानुसारिणी हि सर्वत्र कल्पना ; न दृष्टविरोधिनी । नचैवमीश्वरस्याशक्तिर्निश्चिता । [1]प्रमाणान्तरतस्तत्सिद्धेः । यथोदितप्रमाणबलेन सिध्यन् सांसिद्धिक-सर्वार्थदर्शनतत्प्रेरणशक्तिसंपन्न एव सिध्यति ; कार्यत्वस्य [2]समर्थकर्तृपूर्वकत्वेन प्रतिबन्धात् ।

(धर्मविशेषविरुद्धत्वनिरासः)

यत्तु परिमितशक्तिज्ञानानैश्वर्याद्यापादनात् धर्मविशेषविपरीतसाधनत्वमुद्भावितम्—तत् अतिस्थवीयः, अप्रयोजकत्वात् तेषाम् । न हि किंचित् क्रियमाणं कर्तुरर्थान्तरविषयमसामर्थ्यमज्ञानं वा स्वोत्पत्तयेऽपेक्षते ; स्वसंपादनसमर्थकर्तृमात्राक्षेपात् केवल[3]व्यतिरेकासिद्धेः । तावतैवोपपद्यमाने कार्योदये संबन्धिनोऽकिञ्चित्करस्यार्थान्तरविषयस्याभावस्य हेतुत्वकल्पनानुपपत्तेः ।

अपिच किं तदितरसमस्तवस्तुविषयमज्ञानादि व्यापकम् , उत कतिपयगोचरमिति विवेचनीयम् । न तावत् अशेषविषयम् ; अनुपलब्धेः । न खलु कुम्भकारः कुम्भातिरेकि किमपि न विजानाति । अथ कतिपयविषयम्-तदपि न, अनियतविषयतया तस्यतस्य व्यभिचारदर्शनात् । न चास्ति किंचिद्व्यवस्थितम्, [4]यदविद्यादिमानेव कर्तृतामनुभवति । न च शरीरिणैव कर्त्रा भाव्यम् , शरीरग्रहणेनैवानैकान्त्यात् । न खलु शरीरविशिष्टस्सन्नेवायमात्मा शरीरमुपादत्ते, अयोगिनो युगपदनेकशरीरग्रहणायोगात् । पूर्वदेहपरित्यागेन [5]देहान्तरप्रापककर्मप्रेरितप्राणसहाय एव देहान्तरं प्रविशतीत्युपपादितमात्मचिन्तायाम् ।

---

पक्षान्तर्भूतत्वेनेति तदर्थः । 1. अशक्तिनिश्चयो मा भूत् । न च बाधकाभावमात्रे साधकं विना वस्तुसिद्धिः ; तत्राह प्रमाणेति । इदमेव वाक्यमन्वभाषि–'अतः प्रमाणान्तरतो न तत्सिध्यनुपपत्तिः' इति । अन्तरपदं सर्वशक्तेश्वरसाधकप्रमाणे जीवसाधकप्रमाणापेक्षया अबाधितत्वादिरूपं वैलक्षण्यं स्थितं दर्शयितुम् । ननु कार्यत्वहेतुना शक्तिमत्साक्षात्कारतदधिष्ठानादिकमेव सिद्ध्येत् , न तु शक्त्यादिसाक्षात्कार इत्यत्राह यथेति । सिध्यतो ज्ञानस्य देहादिजन्यत्वे तस्य देहादेरपि पुनश्चेतनपूर्वकत्वेनानवस्थापत्त्या सांसिद्धिकत्वसिद्धौ औत्सर्गिकं प्रकृष्टज्ञानत्वरूपसाक्षात्कारत्वम् , असंकोचात् सर्वार्थगोचरत्वञ्च सिद्धमिति शक्त्यादिसाक्षात्कारो निर्बाध इति भावः । यद्वा प्रमाणान्तरतः अचेतनत्वहेतुतः । एवं कार्यत्वहेतुरप्युक्तरीत्या स्वाभाविकशक्त्यादिपरः सर्वगोचरशक्त्यादिसाधक एवेत्याह यथेति । 2. न हि किञ्चिदशक्तकर्तृपूर्वकत्वेन व्याप्तिरिति भावः । 3. अनपेक्षितवस्त्वन्तरज्ञानादिव्यतिरेकासिद्धेः । यद्वा व्यतिरेकमात्रासिद्धेरित्यर्थः । 4. यद्विषयकाज्ञानेत्यर्थः । 5. अत्र, 'न हि युगपच्छरीरद्वयपरिग्रहः संभवति । नैवम् ; तत्रापि सूक्ष्मशरीरपरित्यागे सर्वत्र शरीरिण एव कर्तृत्वम्' इति प्रभाकरविजयपरासो भाव्य इव ।

(देहदृष्टान्तेन देहनिरपेक्षाधिष्ठानस्थापनम्)

किंच आत्मनश्शरीरमधितिष्ठतोऽधिष्ठानक्रियाकर्मभूतस्य देहस्याधिष्ठातृदशानुप्रवेशोऽनुपपन्नः, युगपदेकक्रियायामेकस्य कर्मकर्तृत्वविरोधात् । अधितिष्ठासितदेहसंयोगवत एव तत्प्रवृत्त्यनुगुणप्रयत्नयोगलक्षणमधिष्ठानं दृष्टमिति चेत्-अस्त्वेकतत्त्व [1](अस्त्वेतम् ; तत्तु अ ?) संबद्धस्याधिष्ठानानुपपत्तेः । प्रेर्यवस्तुसंबन्धिना प्रेरकेण भवितव्यमिति ; न पुनर्देहसंबन्धेन भाव्यमिति । कुतो निर्णयः ? इत एव ; यतोऽन्यदप्यधिष्ठीयमानं [2]मानदण्डादि स्वसंबन्धिनैवाधिष्ठीयते । तेनाधिष्ठानक्रियापेक्षिताधिष्ठेयपदार्थसंबन्धमात्रातिरेकेण देहसंबन्धो नाम अपरो नादर्तव्यः । अस्ति चेश्वरस्यापि जगदुपादानोपकरणैः संबन्ध इत्युक्तमेव ।

(देहव्यतिरिक्तेपि देहसंबन्धं विना प्रवर्तनप्रदर्शनम्)

अथ-स्वदेहव्यतिरिक्ते वस्तुनि प्रवृत्तिविशेषकरत्वं देहद्वारेणैव । दृष्टं हि दण्डचक्रादिषु करसंयोगादिना कुलालादेः प्रवर्तयितृत्वमित्युच्येत-तदपि न-अभिध्यानमात्रेणैव परशरीरगतगरळनिरसन-विसारणदर्शनात् ॥ कथमसति शरीरे परप्रेरणात्मकः संकल्प इति चेत्-किं शरीरं संकल्पयति, येन तदभावे न भवेत् ॥ करणमिति चेन्न-मनसः करणत्वात् । किमस्तीश्वरस्य मनः ? बाढम् । नन्वेवं[1] विग्रहधर्माधर्मानैश्वर्यादयः साधारणधर्माः प्रादुःष्युः—मैवम् ; कार्यत्वाक्षिप्तसमर्थकर्तृम[3]त्त्वाद्दढिम्नैवापास्तत्वात् मनसो नित्येन्द्रियतया देहापगमेऽपि संबन्धाभ्युप[4]गमादनैकान्तिकश्च । यावद्धि दृष्टानुगुणं व्याप्त्युपयोगि, तावदनुज्ञायते । न चास्मदादेर्मनसाऽप्यचिन्त्यरचनस्यापर्यन्तविस्तारस्य महाभूतभौतिकप्रपञ्चस्य प्रादेशिकशरीरकः किंचिज्ज्ञः पुण्यपापपरवशगतिरलं निर्माणायेत्यपरिमितज्ञानैश्वर्यशक्तिः शरीराद्यनपेक्षः संकल्पादेव सकलभुवननिर्माणक्षमः कर्ता सिद्धः ।

(दृष्टान्तदृष्टवैषम्यायोगशङ्कापरिहारः)

ईदृशेन कर्त्रा घटादिषु कार्यत्वस्य संबन्धो न दृष्ट इति चेत्—अतिगहनगिरितटाधिष्ठानेनातिप्रकृष्टादृष्टचरेन्धननिवहसंबन्धिना हुतवहविशेषेण महानसादौ धूमस्य वा किं संबन्धो दृष्टः, येन धूमविशेषदर्शनाद् गिरिशिखरे तथाविधाग्निरनुमीयते ॥ यादृशो धूमो यत्रावगतस्तत्रैव तादृशस्तत्संपादनसमर्थो दृष्टान्तभूमावपरिदृष्टोऽपि सामान्यव्याप्ति

---

अधिष्ठातृदशेति । अधिष्ठातृदेहानुप्रवेश इति, अधिष्ठात्रन्तरानुप्रवेश इति च पा० 1. अस्त्वेकतत्त्वसंबद्धस्याधिष्ठानेत्यत्र, 'नह्येतत् । किन्तु तदसंबद्धस्य तदधिष्ठाने'ति प्रक्षेपबहुले कोशे पाठः । 2. क्षेत्रादिमानार्थदण्डादि । 3. एवं-समनस्कत्वे । 4 विग्रहादिसापेक्षत्वे असामर्थ्यमेव स्यात्, न पक्षीकृतसर्वनिर्माणसामर्थ्यमिति । इदं यावद्धीत्यादिना विव्रियते । क्वचित् समर्थकर्तृ....र्थदृढिम्नेति दर्शनात् समर्थकर्तृमत्त्वार्थदृढिम्नेति पाठ ऊह्यते । 5 मीमांसको मुक्तस्यापि मनोऽभ्युपगच्छति ।

बलेन पक्षधर्मतावशात् सिद्ध्यतीति चेत्--तदिदमस्माभिरभिधीयमानं किमिति न हृदयमधिरोहति भवताम् । इहापि कार्यत्वं समर्थकर्तृपूर्वकत्वेन घटादिषु विदितसंबन्धनियमं क्षित्यादिषु दृश्यमानं स्वसंपादनसमर्थमदृष्टपूर्वमेव बुद्धिमत्कर्तारमुपस्थापयति । यथैव हि देशकालेन्धनपरिमाणादिविशेषानादरेण धूमस्य स्वोदयानुगुणहुतवहमात्रेण संबन्धनियमः, तथैव अनीश्वरत्वकिंचिद्ज्ञत्वशरीरित्वपुण्यपापपरवशत्वमनुष्यत्वादिविशेषप्रहाणेन कार्यस्य स्वनिर्माणसमर्थबुद्धिमत्कर्तृमात्रेण संबन्धनियमनिश्चय इति न कश्चिद्विशेषः ।

(कर्त्रन्तरवैलक्षण्यस्यानेकदृष्टान्तमुखेन स्थिरीकरणम्)

अपिच विभुद्रव्यसंयोगिनः परिस्पन्दवतश्च सर्वत्र स्पर्शवत्त्वाव्यभिचारेऽपि ज्ञानसुखादिनित्यद्रव्यविशेषगुणानुमितात्म[1]संयोगिनो मनसः कथमिव स्पर्शरहितत्वम्? कथञ्च वायवीयद्रव्यस्य महिमगुणशालिनो [2]नियताधिष्ठानस्पार्शनत्वनियमदर्शनेऽपि त्वगिन्द्रिये तद्विपर्ययः, तैजसस्य[3] वा रूपस्पर्शयोः अन्यतरस्य वा प्राकट्यनियमेऽपि रूपोपलम्भसाधनतानुमिततैजसभावस्य चक्षुषो नियमेन तदुभयानुद्भवाभ्युपगमः? अथ कार्यदर्शनानुमितसद्भावानां तैजसादिभावेऽपि तत्तद्विशेषाणां योग्यानुपलब्धिबाधितत्वात् तदभ्युपगमेऽनेकनियमभङ्गप्रसङ्गाच्च तथाऽभ्युपगमः, हन्त तर्हि प्रकृतविषयेऽपि प्रसञ्जितधर्मविशेषाणामनुपलम्भ[4]बाधाविशेषात् *अनेकनियमदर्शनविघातप्रसङ्गाच्च तथाऽभ्युपगम इति सर्वं समानमन्यत्राभिनिवेशात् ॥ (ईश्वरसाधकानि अचेतनत्वादीन्यनुमानान्तराणि)

दृश्यन्ते हि नीतयः (नियतयः) यथा[5] (तथा) विवादास्पदं परमाण्वादि प्रेक्षावत्प्रेरितं चेष्टते, अचेतनत्वात्[6] । यदचेतनम्, तत् तथा; यथा तथाविधं कन्दुकादि । तथा, विवा-

---

1. ज्ञानादिना नित्यद्रव्यीयेण विशेषगुणेनानुमितो य आत्मसंयोगोऽसमवायिकारणभूतः, तद्वत इत्यर्थः । 2. नियताधिष्ठानेतिच्छेदे नियताधिष्ठानस्यासाधारणस्य स्पर्शस्येत्यर्थः स्यात् । अनियताधिष्ठानेतिच्छेदे नियतशरीराधिष्ठानातीन्द्रियत्वगिन्द्रियवैलक्षण्येन तदन्यवायुद्रव्यसामान्यस्य सदागतेरधिष्ठानानियमः स्पार्शनत्वनियमश्चोच्यत इति स्यात् । 3. तैजसगतरूपस्पर्शयोः प्राकट्यमग्न्यादौ; अन्यतरप्राकट्यं रत्नप्रभाकापालपावकादौ । 4. ईश्वरस्य विग्रहवत्त्वमनुपलब्ध्या बाध्यते ।

5. **तथे**ति पाठे **तथा** उक्तनीतिवत् अन्या अपि नीतयो दृश्यन्ते हीत्यर्थः । 6. **न्यायकुसुमाञ्जला**वपि कार्यत्वानुमानानन्तरं कार्यायोजनेतिकारिकास्थाऽऽयोजनविवरणावसरे अचेतनत्व-

---

* एतदारभ्य स्थितं पाठान्तरं 'बाधितत्वात्' इत्यारभ्यपाठान्तरत्वेनैव तत्रतत्र मुद्रितम् । तत्तु मद्रनगर राजकीयकोशालयस्थे डि. १५२८४ कोशे दृश्यते । स तु कोश आदितःप्रभृति आन्तमनेकपदवाक्यप्रक्षेपबहुलोऽशुद्धश्चेति, तदीयविलक्षणपाठस्यात्र परं प्रदर्शनं व्यर्थमिति चात्र पुस्तके तन्मुद्रणमुपेक्षितम् ॥

दाध्यासिता बाह्याभ्यन्तरप्रवृत्तयः [1]प्रकृत्युपकरणप्रत्यक्षपूर्विकाः कार्यत्वात्, तद्वदेव ।

प्रत्यक्षं तत् प्रमेयत्वात् पदार्थत्वात् घटादिवत् ।
एकेच्छानुविधायीदम(मा)चैतन्यात् स्वदेहवत् ॥ १६ ॥
एकेनाधिष्ठिताः कार्यं कुर्वते सर्वचेतनाः ।
देहसंबन्धसापेक्षकार्यकृत्त्वात् त्वगादिवत् ॥ १७ ॥
एकप्रधानपुरुषं विवादाध्यासितं जगत् ।
चेतनाचेतनात्मत्वादेकराजकदेशवत् ॥ १८ ॥

(इतःपरमीश्वरसिद्धिग्रन्थो नोपलभ्यते)

श्रीभगवद्यामुनमुनये नमः ।

॥ शुभमस्तु ॥

*-*-*-*

---

हेतुकानुमानं द्वितीयमुक्तं पञ्चमस्तबके । [1]**प्रकृती**ति । उपादानेत्यर्थः । शक्त्यादेः साध्ये घटने दृष्टान्ते कुलालादौ शक्तिसाक्षात्काराभावात् प्रत्यक्षत्वेन रूपेण ज्ञानस्य साध्यकोटौ निवेशोऽशक्य आसीत् । उपादानोपकरणमात्रग्रहणे तु प्रत्यक्षज्ञानत्वेन निवेशः क्रियत इति भावः ।

श्रीगुरुभ्यो नमः

श्रीः

**श्रीमते रङ्गरामानुजमहादेशिकाय नमः**

## संवित्सिद्धिगूढप्रकाशः

इयं संवित्सिद्धिः सिद्धित्रये प्रथमा । अत्र च परमतसंवित्स्वरूपादि विमृश्य स्वमतं स्थाप्यते । **शतदूषण्याञ्च** संविदद्वैतभङ्गवादे (३३), 'एकैव संविदनेकज्ञातृज्ञेयतदवच्छिन्नज्ञप्तिरूपेण विवर्तते' इति नूनमेतद्ग्रन्थपूर्वपक्षपरमसारः प्रादर्शि । एवमेवोपक्रान्तः **श्रीभाष्ये** महापूर्वपक्षोपि सहसिद्धान्तः प्राय एतद्ग्रन्थशैलीमवलम्ब्य स्यात् । 'प्रकाशश्च चिदचिदशेषपदार्थसाधारणो धर्म इति संवित्सिद्धावेव साधितम्' इत्यात्मसिद्धिवचनाच्चात्र मीमांसकादिमतशोधनमपि कृतं लक्ष्यते । अत्रत्याः साम्प्रतमनुपलभ्यमानाः काश्चित् कारिकाः **श्रुतप्रकाशिकायां** दृश्यन्ते । यथा—यद्यप्रकाशमाना धीः कदाचिदवतिष्ठते । घटादाविव तत्रापि कल्पनीयं प्रकाशनम्, 'घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते । न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते', 'अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः। न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति॥', 'तदेवापश्यतां सर्वशून्यत्वाद्बिभ्यतां सताम् । गतिः स्वयंप्रकाशत्वात् ऋते नान्योपलभ्यते॥' इति । एवमन्यदपि । एवं **तत्त्वटीकाया**मपि । एवमत्रोपक्रमे मध्ये च भागो बहुर्नष्ट इति एतद्ग्रन्थ एव व्यनक्ति। तथा ह्यत्र वचनानि—'व्यावहारिकसत्यत्वान्मृषात्वेऽप्यविरुद्धता । प्रत्यक्षादेरिति मतं प्रागेव समदूदुषम् ॥' इति ; मायाऽविद्याभेदं प्रस्तुत्य च, 'क्षुद्रब्रह्मविदामेतन्मतं प्रागेव दूषितम्' इति ; अन्यत्र च, 'भेदाभेदविकल्पस्तु यस्त्वया परिचोदितः' इति; 'सदसद्व्यतिरेकोक्तिः

॥ श्रीः ॥

श्रीभगवद्यामुनमुनये नमः

# संवित्सिद्धिः

.... .... .... .... ....

(अद्वितीयश्रुत्यर्थविचारः)

**एकमेवाद्वितीयं त(स?)द्ब्रह्मेत्युपनिषद्वचः ।**
**ब्रह्मणोऽन्यस्य सद्भावं ननु तत् प्रतिषेधति ॥**
**अत्र ब्रूमोऽद्वितीयोक्तौ समासः को विवक्षितः ।**
**किंस्वित् तत्पुरुषः किं वा बहुव्रीहिरथोच्यताम् ॥**

(परमतेऽत्र तत्पुरुषायोगः)

**(२) पूर्वस्मिन्नुत्तर[1]स्तावत्प्राधान्येन विवक्ष्यते । पदार्थस्तत्र तद्ब्रह्म ततोऽन्यत् सदृशं तु वा ॥**
**तद्विरुद्धमथो वा स्यात् त्रिष्वप्यन्यन्न बाधते । अन्यत्वे सदृशत्वे वा द्वितीयं सिद्ध्यति ध्रुवम् ॥**
**विरुद्धत्वे द्वितीयेन तृतीयं प्रथमं तु वा । ब्रह्म प्राप्नोति यस्मात्[2] तद् द्वितीयेन विरुध्यते ॥**
**अतः सप्रथमाः सर्वे तृतीयाद्या(द्य?)र्थराशयः ।**

---

पूर्वमेव पराकृता' इति च । आत्मसिद्धिसंविदात्मवादस्थल इव बौद्धमतसहोपलम्भनियमादिप्रस्तावोऽप्यत्रेति, 'नीलाद्युपप्लवापेतस्वच्छचिन्मात्रसंततिः' इति वचनान्निश्चीयते । भेदस्य प्रत्यक्षाविषयत्वं ब्रह्मसिद्ध्युक्तमप्युपर्यनूद्य खण्ड्यते । तथा चात्र ज्ञातृज्ञेयादिभेदमृषात्वम्, एकाविद्यामायाविद्याभेदादिमतभेदः, प्रत्यक्षस्य व्यावहारिकगोचरत्वेन वा भेदस्य प्रत्यक्षागोचरत्वाद्वा अद्वैतागमाविरोधः; संवित्स्वयंप्रकाशत्वप्राकट्यादि, संविदद्वैतस्य युक्तिभिरागमैश्च गम्यत्वमित्यादि बहु एतदनुसारिश्रीभाष्यमहापूर्वपक्षादाविव विचार्य तत्रैव सिद्धान्तः स्थापित इत्यवगम्यते ।

उपलभ्यमानाश्च काश्चित् कारिकास्तत्रतत्रोपात्तास्सन्त्येव । तत्रतत्र शतदूषणीमिमां संवित्सिद्धिञ्च सावधानं सेवमानानामेतद्ग्रन्थसंदर्भविस्तरभूतोऽयमयं शतदूषणीभाग इति सुज्ञानम् । तदिदं बहुषु स्थलेष्वत्रापि दर्शयिष्यते । तत्रायमुपलभ्यमानभागोपक्रमस्थोऽद्वितीयश्रुत्यर्थविचारः, 'स्वतस्सर्वजगत्सूतेः संवित्सिद्ध्यादिभिः स्फुटम् । अद्वितीयपदोक्त्यैव साधिता सविशेषता' इति संवित्सिद्धीति ग्रन्थनिर्देशपूर्वकमेव शतदूषण्यामद्वितीयश्रुतिविसंवादवादे (५९) व्यस्तारि ।

1. **इतरः** उत्तरः । तत्पुरुषपक्षे उत्तरपदार्थप्राधान्यम्; बहुव्रीहौ त्वन्यपदार्थप्राधान्यमिति । ननु द्वितीयभिन्नमित्याद्यर्थे नञर्थस्यैव प्राधान्यात् कथमुत्तरप्राधान्यमिति चेन्न—अब्राह्मण इत्यादौ भिन्नाद्यर्थलाभस्यार्थिकता, आरोपितब्राह्मणत्ववानिति च वाच्यार्थ इति वर्णयद्भिर्वैयाकरणैर्बहूपपत्तिपूर्वकमुत्तरप्राधान्यस्य नञ्समासे स्थापितत्वात् तदनुसारेणेदम् । अथ वा **इतरः** द्वितीयातिरिक्तः। 2. **तत्** तृतीयप्रथमादिकम् ।

द्वितीयेन तथा[1] स्पृष्टा (ष्टाः ?) (स्पष्टा) स्वस्यास्तिष्ठन्त्यबाधिताः ॥
ननु नञ् ब्रह्मणोऽन्यस्य सर्वस्यैव निषेधकम् । द्वितीयग्रहणं यस्मात् सर्वस्यैवोपलक्षणम् ॥
नैवम् , निषेधो[2] न ह्यस्माद् द्वितीयस्यावगम्यते । ततोऽन्यत् तद्विरुद्धं वा सदृशं वाऽत्र वक्ति सः॥
द्वितीयं[3] यस्य नैवास्ति तद्ब्रह्मेति विवक्षिते । सत्यादिलक्षणोक्तीनामपलक्षणता भवेत् ॥
अद्वितीये द्वितीयार्थनास्तितामात्रगोचरे । स्वनिष्ठत्वान्नञर्थस्य न स्याद्ब्रह्मपदान्वयः ॥
द्वितीयशून्यता तत्र ब्रह्मणो न विशेषणम् । विशेषणे[4] वा तद्ब्रह्म तृतीयं प्रथमं तु वा ॥

(बहुव्रीह्ययोग:)

(3) प्रसक्तं पूर्ववत् सर्वं बहुव्रीहौ समस्यति । ब्रह्मणः[5] प्रथमा (मो ?) ये च तृतीयाद्या जगत्त्रये ॥
ब्रह्म प्रत्यद्वितीयत्वात् स्वस्यास्तिष्ठन्त्यबाधिताः । [6]किञ्च तत्र बहुव्रीहौ समासे संश्रिते सति ॥
[7]वृत्त्यर्थस्य नञर्थस्य न पदार्थान्तरान्वयः । सत्या(त्य ?)र्थान्तरसम्बन्धे षष्ठी यस्येति युज्यते ॥
द्वितीयवस्तुनास्तित्वं न ब्रह्म न विशेषणम् । असत्त्वात् ; न ह्यसत् ब्रह्म भवेत् , नापि विशेषणम् ॥
तस्मात् प्रपञ्चसद्भावो नाद्वैतश्रुतिबाधितः । स्वप्रमाणबलात् सिद्धः श्रुत्या[8] चाप्यनुमोदितः ॥

(सिद्धान्ते अद्वितीयश्रुत्यर्थ:)

(4) तेनाद्वितीयं ब्रह्मेति श्रुतेरर्थोऽयमुच्यते । द्वितीयगणनायोग्यो नासीदस्ति भविष्यति ॥

---

1. **तथा** विरुद्धत्वेन स्पृष्टाः । अद्वितीयमित्यत्र विरुद्धत्वद्वारा द्वितीयस्यान्वयः । तत्राद्वितीयमिति प्रथमविवक्षायां पदार्थद्वयसिद्धिः । तृतीयचतुर्थादिविवक्षायां त्रयचतुष्टयादिसिद्धिः। 2. **निषेधः** अभावः । 3. अस्य श्लोकस्य तत्पुरुषपक्षनिविष्टत्वादेवमर्थः—**यस्य** यत् प्रति द्वितीयं नास्ति, यदपेक्षया द्वितीयाभावोऽद्वितीयपदार्थः, तद्ब्रह्मेत्युक्तौ अद्वितीयश्रुतिर्गुणतोपि सद्वितीयतां न सहत इति सत्यादिवाक्यं लक्षणपरं न स्यादिति । 4. ब्रह्मणो द्वितीयाभावरूपत्वस्वीकारेण विशेषणत्वेपि प्रतियोग्यभावयोरेकत्वायोगेन प्रतियोगिनो द्वितीयत्वे यदपेक्षया प्रकृताभावप्रतियोगि द्वितीयं तत् प्रथमम् ; अभावरूपं ब्रह्म तृतीयम् । अभावापेक्षयैव प्रतियोगिनो द्वितीयत्वे च ब्रह्म प्रथममिति सिद्ध्यतीत्यर्थः । तथाच लोके परमार्थस्यैव प्रतियोगित्वान्नैकमात्रसिद्धिरिति भावः । अत्र प्रागप्रध्वंसात्यन्तान्योन्याभावविकल्पेन ब्रह्मणोऽनित्यत्वं कार्यत्वं, प्रपञ्चस्य तुच्छत्वम् , इष्टासिद्धिश्च ; द्वितीयाभावस्य स्वप्रकाशत्वे द्वितीयस्य प्रतियोगिनोऽध्यासायोगश्चेति शतदूषण्याम् । 5. ब्रह्मणो यत् प्रथमं, ब्रह्म प्रति यानि तृतीयादीनि, तानि सर्वाणि ब्रह्मण्यबाधितानि ; कुतः ? तस्याद्वितीयत्वात् । द्वितीयमात्ररहितत्वादिति । तदुक्तम्—'प्रथमादिविधिकटाक्षेणे'ति ।

6. सर्वनिषेधाभिप्रायेण बहुव्रीहौ दोषमाह **किञ्चे**ति । 7. क्वचित्तालकोशे व्रत्यर्थस्येति पाठः ; अन्यत्र सर्वत्र 'वत्यर्थस्ये'ति । **वृत्त्यर्थस्य** वृत्त्युपस्थाप्यस्य, **नञर्थस्य** निषेधस्य द्वितीयाभावरूपस्य । तदुक्तम्-'द्वितीयनिषेधवत्त्वञ्च ब्रह्मण उपस्थापयन्त्यां वृत्तौ कथं निर्विशेषत्वसिद्धिः' इति । 8. प्रकृतवाक्यस्याप्रशब्द-कर्मकाण्ड-सृष्टिश्रुत्यादिना । चः श्रुत्यर्थापत्तिसमुच्चये ।

[1]समो वाऽभ्यधिको वाऽस्य यो द्वितीयस्तु गण्यते। यतोऽस्य विभवव्यूहकलामात्रमिदं जगत् ॥
द्वितीयवागास्पदतां प्रतिपद्येत तत् कथम्। यथा चोलनृप[2]स्सम्राडद्वितीतीयोऽद्य (त्र) भूतले ॥
इति तत्तुल्यनृपतिनिवारणपरं वचः। न तु [3]तद्भृत्यतत्पुत्रकलत्रादिनिषेध(निवार)कम् ॥
तथा सुरासुरनरब्रह्मब्रह्माण्डकोटयः। [4]क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः ॥
ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः। विष्णोर्विभूतिमहिमसमुद्रद्रप्सविप्रुषः ॥
कः खल्वङ्गुलिभङ्गेन समुद्रान् सप्त संख्यया। गणयन् गणयेद्र्मिफेनबुद्बुदविप्रुषः ॥
यथैक एव सविता न द्वितीयो नभस्स्थले। इत्युक्त्या न हि सावित्रा निषिध्यन्तेऽत्र रश्मयः॥
यथा [5]प्रधानसंख्येयसंख्यायां नैव गण्यते। संख्या [6]पृथक्सती तत्र संख्येयान्यपदार्थवत् ॥

(सिद्धान्ते श्रुत्यन्तरोपष्टम्भः)

(5) तथा—'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'। इति ब्रुवञ्ज(न्न ?) गत् सर्वमित्थम्भावे न्यवेशयत् ॥ तथा—'एतावानस्य महिमा ततो ज्यायस्तरो हि सः', 'यत्रान्यन्न विजानाति स भूमा', 'उदरमन्तरम् ॥
कुरुतेऽस्य भयं व्यक्तम्' इत्यादिश्रुतयः पराः। 'मेरोरिवाणुर्यस्येदं ब्रह्माण्डमखिलं जगत् ॥'
इत्यादिकाः समस्तस्य तदित्थम्भावतापराः[7]। 'वाचारम्भणमात्रं तु जगत् स्थावरजङ्गमम् ॥
विकारजातं ; कूटस्थं मूलकारणमेव सत्। अनन्यत् कारणात् कार्यं पावकाद्विस्फुलिंगवत् ॥
मृत्तिकालोहबीजादिनानादृष्टान्तविस्तरैः।' 'नाशकद्दग्धुमनलस्तृणं मज्जयितुं जलम् ॥
न वायुश्चलितुं शक्तस्तच्छक्त्याप्यायनात् ऋते।' '[8]एकप्रधानविज्ञानात् विज्ञातमखिलं भवेत् ॥"

---

1. 'असत्पक्षे तु वृत्तिद्वयमपि सम्यक्। द्वितीयव्यतिरेकोक्त्या सतः स्यादग्रगण्यता।-द्वितीयशून्यतोक्त्या च तत्समाननिषेधनम्' इति श–दू–। निमित्तरूपकारणान्तरनिषेधेन ब्रह्मणस्स्वतस्सर्वजगत्सूतित्वबोधकोऽद्वितीयशब्द इति भाष्यार्थस्य प्रकृतग्रन्थार्थसामरस्यमभिप्रेत्य च 'कारणपरत्वे च सति.... अद्वितीयपदस्य स्वतन्त्रभेदनिषेधपरत्वे प्राप्ते सति अविभक्तनामरूपताप्रतिपादकेन एकमिति पदेनोपादानत्वस्य सिद्धत्वान्निमित्तान्तरस्य बुद्धिस्थत्वाच्च निमित्तान्तररूपस्वतन्त्रवस्तुनिषेधपरमद्वितीयपदम्' इति श्रु. प्र. जि.; एवं शतदूषण्यपि। 2. अस्यैव राज्ञस्सभायां वादिनो विजित्य निजवैष्णवसिद्धान्तस्थापनादेते परमाचार्याः गार्हस्थ्ये 'आळ वन्दार्' इत्यभिनन्दनेनार्धराज्यप्रदानेन संमानिताः। 3. 'यथा शरीरजाति....गुणवसनभूषणादि....पुरुषेऽवस्थिते तत्रैक एव तिष्ठति....इति व्यपदिशन्ती'ति शतदूषणी (३६)। 4. 'अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः; कर्म पुण्यापुण्यरूपम्, तत्फलं विपाकः, आशयो वासना॥ 5. प्रधानसंख्येयः इति सविसर्गपाठः सर्वत्र। 6. अन्यतया स्थितापीत्यर्थः। अपृथक्सतीतिच्छेदे अपृथक्सिद्धत्वान्न गण्यत इत्यर्थः। 7. प्रकारतापराः। 8. विशिष्टे विशेष्यतयान्तर्गतत्वात् कारणत्वाच्च प्राधान्यम्। कारणदशायां चिदचिदीश्वरत्रयसत्त्वेऽप्येतन्मात्रनिर्देशे ईदृशप्राधान्यात्। अन्यत्तु विशेषणं, कारणतावच्छेदकञ्चेति।

इत्यादिवेदवचन--तन्मूलागमैरपि । [1]ब्रह्मात्मनाऽऽत्मलाभोऽयं प्रपञ्चश्चिदचिन्मयः ॥

( प्रपञ्चनिषेधायोगः )

इति प्रमीयते ब्राह्मी विभूतिर्न निषिध्यते । तन्निषेधे समस्तस्य मिथ्यात्वात् लोकवेदयोः ॥
व्यवहारास्तु लुप्येरन् तथा स्याद्ब्रह्मधीरपि । 'व्यावहारिकसत्यत्वान्मृषात्वेऽप्यविरुद्धता ॥
प्रत्यक्षादे'रिति मतं प्रागेव समदूदुषम् । अतश्चोपनिषज्जातब्रह्माद्वैतधिया जगत् ॥
न बाध्यते विभूतित्वाद्ब्रह्मणश्चेत्यवस्थितम् ।

(प्रपञ्चे सत्त्वासत्त्वसंकरविचारः )

(7) [2]ननु सत्त्वे प्रपञ्चस्य नास्तीति प्रत्ययः कथम् ॥
[3]असत्त्वे वा कथं तस्मिन् अस्तीति प्रत्ययो भवेत् । सदसत्त्वं तथैकस्य विरुद्धत्वादसंभवि ॥
सदसत्प्रत्ययप्राप्तविरुद्धद्वन्द्वसंगमे । तयोरन्यतरार्थस्य निश्चयाभावहेतुतः ॥
सदसत्त्वं प्रपञ्चस्य जैनास्तु प्रतिजानते । सत्त्वप्राप्तिं पुरस्कृत्य नास्तीति प्रत्ययोदयात् ॥
सदा सत्त्वं प्रपञ्चस्य सांख्यास्तु प्रतिपेदिरे । सदसत्प्रत्ययप्राप्तविरुद्धद्वन्द्वसंकटे ॥
विरोधपरिहारार्थं सत्त्वासत्त्वांशभङ्गतः । सदसद्भ्यामनिर्वाच्यं प्रपञ्चं केचिदूचिरे ॥
सत्त्वासत्त्वे विभागेन देशकालादिभेदतः । घटादेरिति मन्वाना व्यवस्थामपरे[4] जगुः ॥
तदेवं वादिसंमर्दात् संशये समुपस्थिते । निर्णयः क्रियते तत्र मीमांसकमतेन तु ॥
[5]घटस्वरूपे नास्तित्वमस्तित्वं यद्यबूबुधत् (न् ?) । स्यादेव युगपत् सत्त्वमसत्त्वञ्च घटादिषु ॥
इदानीमिदमत्रास्ति नास्तीत्येवंविधा यतः । देशकालदशाभेदादस्तिनास्तीति नो धियः ॥
अतो देशादिभेदेन सदसत्त्वं घटादिषु । व्यवस्थितं निरस्तत्वा[6] (स्या ?)द्वादस्येह न संभवः॥
[7]ननु देशादिसंबन्धः सत एवोपपद्यते । न देशकालसंबन्धात् असतस्सत्त्वमिष्यते ॥
संबन्धो ह्याश्रयस्तस्मात्सतस्सत्त्वं सदा भवेत् । असतः कारकैस्सत्त्वं जन्मनेत्यतिदुर्घटम् ॥
[8]आद्यन्तवान् प्रपञ्चोऽतः सत्कक्ष्यान्तर्निवेक्ष्यते । उक्तञ्च—"आदावन्ते च यन्नास्ति नास्ति मध्येऽपि तत्तथा ॥"
अतो निश्चितसद्भावस्सदा सन्नभ्युपेयताम् । असतः सर्वदाऽसत्त्वं जन्ययोगात्[9] खपुष्पवत् ॥
असत्त्वे न विशेषोऽस्ति [10]प्रागत्यन्तासतोरिह ।

---

1. ब्रह्मरूपेणात्मनाऽन्तर्यामिणा । आत्मनः स्वरूपस्य लाभो यस्येति बहुव्रीहिः। 2. एतत्प्रघट्टार्थश्च शतदूषण्यां सत्त्वासत्त्वविवेकवाद (६०) तो द्रष्टव्यः । 3. अनेन बौद्धमतनिरासः । 4. मीमांसकाः सिद्धान्तिनश्च । 5. जैनमतं निरस्यति घटेति । धिय इति वक्ष्यमाणत्वादत्रापि धियां कर्तृत्वे अबूबुधन्निति बहुवचनं युक्तम् । 6. स्याद्वादस्येति पाठो युक्ततरः ; जैनवादस्येत्यर्थः । 7. साङ्ख्यमतमुत्थापयति ।

8. आद्यन्तवत्त्वेनाभिमन्यमानः । 9. जन्ययोगात् जनेरुत्पत्तेरयोगात् । 10. प्रागसतः कार्यत्वाभिमतस्य, अत्यन्तासतः खपुष्पस्य च ।

[1] ... .... .... .... ... ... ... १

(तत्त्वमसिवाक्यार्थविचारः)

(8) [2]श्वेतकेतुमुपादाय 'तत् त्वम्' इत्यपि यच्छ्रुतम्, षष्ठप्रपाठके तस्य कुतो मुख्यार्थसंभवः॥
कार्पण्यशोकदुःखार्तश्चेतनः त्वम्पदोदितः। सर्वज्ञस्सत्यसंकल्पो निःसीमसुखसागरः॥
तत्पदार्थस्तयोरैक्यं तेजस्तिमिरवत् कथम्।
त्वमर्थस्थे तटस्थे वा [तदर्थस्थे च भेदके]। गुणे तत्त्वंपदश्रुत्योरैकार्थ्यं दूरवारितम्॥
अज्ञत्वसर्ववेदित्वदुःखित्वसुखितादिके। विशेषणे वा [3]चिद्धातोरथवाऽप्युपलक्षणे[4]॥
विरुद्धगुणसंक्रान्तेर्भेदः स्यात् त्वंतदर्थयोः। 'वाच्यैकदेशभङ्गेन चिदेकव्यक्तिनिष्ठता॥
सोऽयं गौरितिवत् तत्त्वंपदयोः' इत्यपेशलम्। देशकालदशाभेदादेकस्मिन्नपि धर्मिणि॥
विरुद्धद्वन्द्वसंक्रान्तेः[5] सोऽयं गौरिति युज्यते। स्वप्रकाशस्य चिद्धातोर्विरुद्धद्वन्द्वसंगतौ॥
[6]न व्यवस्थापकं किञ्चित् देशकालदशादिके। निर्धूतनिखिलद्वन्द्वस्वप्रकाशे चिदात्मनि॥
द्वैतानर्थभ्रमाभावात् शास्त्रं निर्विषयं भवेत्। एतेन[7] सत्यकामत्व—जगत्कारणतादयः॥
मा[योपाधौ] परेऽध्यस्ताः, शोकमोहादयः पुनः। अविद्योपाधिके जीवे [8]विनाशेने (विभागेने?)ति यन्मतम्॥ क्षुद्रब्रह्मविदामेतन्मतं प्रागेव दूषितम्। चित्स्वरूपे विशिष्टे वा मायाऽविद्याद्युपाधयः॥
पूर्वस्मिन् सर्वसांकर्यं परजीवाविभागतः। उत्तरस्मिन्नपि तथा विशिष्टमपि[9] चित् यदि॥
चित्स्वरूपं हि निर्भेदं मायाविद्याद्युपाधिभिः। विभिन्नमिव विभ्रान्तं विशिष्टञ्च[10] [अभिमन्यते]॥
तटस्थावस्थिता धर्माः स्वरूपं न स्पृशन्ति किम्[11]। न हि दण्डि (ण्डय?) शिरश्छेदात् देवदत्तो न

---

1. अत्रोक्तानां जैनसाङ्ख्याद्वैतिमीमांसकमतानां मध्ये जैननिराकरणपूर्वकसांख्यप्रस्तावमात्रोपलम्भात् सांख्यदूषणाद्वैतिप्रस्तावतद्दूषणभागो लुप्त इत्यालोच्यते; उत्तरोपलब्धांशेनासङ्गतत्वाच्च। 'सदसद्व्यतिरेकोक्तिः पूर्वमेव पराकृता' इत्युपरितनवाक्यमत्रत्यपराकरणप्रकाराभिप्रायमपि स्यात्। 2. तत्त्वमसिवाक्यादखण्डैकमात्रसिद्धिरिति परोक्तं निरस्यति **श्वेतकेतु**मिति। 3. मूलभूतं सारभूतं वा वस्तु धातुशब्देन तत्रतत्रोच्यते, आकाशधातुः, तेजोधातुः, विज्ञानधातुरित्येवम्। 4. उपलक्ष्यैक्ये उपलक्षणद्वयवैयर्थ्यादुपलक्षणवैलक्षण्याच्चोपलक्ष्यधर्मभेद आवश्यक इति विरुद्धगुणत्वमवर्ज्यमिति। 5. तथाच तत्रापि न व्यक्तिमात्रे लक्षणेति। 6. विभिन्नोपाधिमप्यन्तरेण चिति अज्ञत्वसर्वज्ञत्वस्वीकारे विरुद्धसमावेशदोषो दुर्वार इति भावः। 7. उपाध्यभावे विरोधपरिहारायोग इति हेतुना। अस्य **यन्मत**मित्यत्रान्वयः। 8. उपरि **परजीवाविभागत** इति दर्शनादत्रापि 'विभागेन' इति स्यात्। 9. विशिष्टे मायादिसंबन्धवादिनापि विशिष्टान्तर्गते विशेषणे तदयोगात् विशेष्यांशे तदुक्तौ सर्वसांकर्यदोष एवेति। 10. अतो मायाद्यतिरिक्तं विशेषणमपि दुर्वचमिति। 11. तदुक्तम्, 'न चोपलक्षणं सर्वं बहिःष्ठमिति नियमः, गोत्वपृथिवीत्वाद्युपलक्षणसास्नादिमत्त्वगन्धवत्त्वादेर्बहिःष्ठत्वाभावात्' (श. दू. ३८) इति। न ह्यज्ञत्वादिकमविद्यादिमात्रगतम्; तथासति मायाविद्ययोरेव जीवत्वेश्वरत्वापत्तेः। अत इह तटस्थता-

हिंसितः ॥ [1]अचिदंशव्यपोहेन चिदेकपरिशेषता । अतस्तत्त्वमसीत्यादेरर्थे इत्यप्यसुन्दरम् ॥ [2]अब्रह्मानात्मताभावे प्रत्यक्चित् परिशिष्यते । तत्त्वम्पदद्वयं जीवपरतादात्म्यगोचरम् ॥ तन्मुख्यवृत्तितादात्म्यमपि वस्तुद्वयाश्रयम् । भेदाभेदविकल्पस्तु यस्त्वया परिचोदितः ॥ [3]अभेदाभेदिनोऽसत्त्वे बन्धे सति (?) निरर्थकः। [4]अभेदो भेदमर्दी तु(ति)स्वाश्रयीभूतवस्तुनोः॥ भेदः परस्परानात्म्यं भावानामेवमेतयोः ; स्वरूपमभ्युपेत्यैव भेदाभेदविकल्पयोः ॥ [विधानं] तेन वाग्बाधा[5]विरोधेन निगृह्यसे । भिन्नाभिन्नत्वसंबन्धसदसत्त्वविकल्पनम् ॥ प्रत्यक्षानुभवापास्तं केवलं कण्ठशोषणम् । नीले नीलमतिर्यादृक् उत्पले नीलधीर्हि सा ॥ नीलमुत्पलमेवेदमिति साक्षाच्चकास्ति नः । यथा विदितसंयोगसंबन्धेऽप्यक्षगोचरे ॥ भेदाभेदा[6]दिदुस्तर्कविकल्पाऽऽधानविभ्रमः । तद्वत् तादात्म्यसंबन्धे श्रुतिप्रत्यक्षमूलके ॥ श्रुतिदण्डेन दुस्तर्कविकल्पभ्रमवारणम् । निर्दोषाऽपौरुषेयी च श्रुतिरत्यर्थमादरात् ॥ असकृत् 'तत् त्वम्' इत्याह तादात्म्यं ब्रह्मजीवयोः। [7]ब्रह्मानन्दंह (न्दह ?) दान्तःस्थो मुक्तात्मा सुखमेधते ॥ फले च फलिनोऽभावान्मोक्षस्यापुरुषार्थता । एकशेषे हि चिद्धातोः कस्य मोक्षः फलं भवेत् ॥

(एकस्यास्संविदः प्रपञ्चोपादानत्वेऽनुपपत्तिः)

(8) किञ्च प्रपञ्चरूपेण का नु संवित् विवर्तते । न तावद्घटधीः, तस्यामसत्यामपि दर्शनात् ॥ न हि तस्यामजातायां नष्टायां वाऽखिलं जगत् । नास्तीति शक्यते वक्तुमुक्तौ प्रत्यबाधनात् ॥ नाप्यन्यसंवित्, तन्नाशेऽप्यन्येषा[8]मुपलम्भनात् ॥

---

वादिना उपहितस्वरूपगत्वमेव वाच्यमिति । दण्डीत्यत्र दण्डयेति स्यात्, अज्ञत्वादौ अविद्याशबलत्वादेरिव शिरश्छेदे दण्ड्यताया: प्रयोजकत्वसंभवात् । 1. मायाविद्योपाधिपक्षदूषणं निगमयति ॥ अत इत्यस्य तत्त्वम्पदयोः मायाविद्यावच्छिन्नचिद्वाचकत्वाभावादित्यर्थकस्यासुन्दरमित्यत्रान्वय: । 2. त्वमर्थे आत्मनि अब्रह्मत्वस्य, तदर्थे ब्रह्मण्यनात्मत्वस्य चाभावे पदद्वयार्थस्यात्यन्ताभिन्नत्वे केवलचिन्मात्रमर्थ: स्यात् । तथा च प्रवृत्तिनिमित्तभेदविशिष्टवेषेण वस्तुभेदप्रयुक्तत्वात् तादात्म्यस्य, तदत्र न भवतीति । 3. यत्र प्रवृत्तिनिमित्तरूपेण भेदः, विशेष्यरूपेणाभेदश्च, तत् भेदाभेदि, तदन्यस्य, घटः पटः, घटो घट इति च तादात्म्यसंबन्धे असति उक्तविकल्पो व्यर्थ इति । सतीत्यत्र 'स तु' इति वा पाठः । 4. ब्रह्मसिद्धिकारादिना भेदाभेदयोस्स्वरूपभेदसिद्धान्तमभ्युपेत्यैव तद्विरोधिवचनान्निग्रहस्थानमित्याह । 5. बाधारूपो विरोधः । बाधादिति पाठो वा । 6. भिन्नयोस्संयोगश्चेत्, विन्ध्यहिमवतोस्स्यात् । अभिन्नगश्चेत्, स्वात्मना सहापि घटादेस्स्यादित्येतादृशः । 7. मोक्षेपि ब्रह्मभिन्नजीवस्थितेरावश्यकत्वं दर्शयति ॥ अन्तःस्थपदेन नदीसमुद्रजलयोरिव मुक्तब्रह्मणोर्भेदः, त्वम्पदस्य प्रकारभूतजीवविशिष्टपरत्वञ्च दर्श्यते । फले फलकाले । फलेनेति पाठे सहयोगे तृतीया । 8. अन्येषां प्रापञ्चिकपदार्थानाम् ।

(अथ पूर्वपक्षः—तत्र सोपपत्ति संविदेकत्ववचनम्)

(10) ननु संवित् अभिन्नैका न तस्यामस्ति भेदधीः । घटादयो हि भिद्यन्ते न तु सा चित् प्रकाशनात् ॥

घटधीः पटसंवित्तिसमये नावभाति चेत् । नैवम्, घटो हि नाभाति सा स्फुरत्येव तु स्फुटम् ॥
घटव्यावृत्तसंवित्तिरथ न स्फुरतीति चेत् । तद्व्यावृत्ति (त्त?) पदेनापि किं सैवोक्ताऽथवेतरत् ॥
सैव चेत्, भासते,ऽन्यच्चेत्, न भ्रमस्तस्य भासनम् ।

[1]किञ्चास्याः स्वप्रकाशाया नीरूपाया न हि स्वतः ॥ ऋते विषयनानात्वान्नानात्वावग्रहभ्रमः ।
[2]न वस्तु वस्तुधर्मो वा न प्रत्यक्षो न लैङ्गिकः ॥ घटादिवेद्यभेदोऽपि केवलं भ्रमलक्षणः[3] ।
यदा, तदा तदायत्तो धीभेदावग्रहोदयः ॥ कुतः, कुतस्तरां तस्य परमार्थत्वसंभवः ।

(पूर्वपक्षे संविन्नित्यत्वम्)

(11) किञ्च[4] स्वयंप्रकाशस्य स्वतो वा परतोऽपि वा । प्रागभावादिसिद्धिः स्यात्; स्वतस्तावत् न युज्यते ॥ स्वस्मिन् सति विरुद्धत्वादभावस्यानवस्थितेः । स्वनिमित्तप्रकाशस्य स्वस्याभावेऽप्यसंभवात् ॥ अनन्यगोचरत्वेन चितो न परतोऽपि च ।

(तत्र संविन्निर्धर्मकत्वम्)

(12) किञ्च[5] वेद्यस्य भेदादेर्न चिद्धर्मत्वसंभवः । रूपादिवत् अतः संविदद्वितीया स्वयम्प्रभा ॥
अतस्तद्भेदमाश्रित्य यत् विकल्पादिजल्पितम् । तदविद्याविलासोऽयमिति ब्रह्मविदो विदुः ॥

(उक्तपूर्वपक्षखण्डनविस्तरः ; संविद्भेदसमर्थनम्)

(13) हन्त! ब्रह्मोपदेशोऽयं श्रद्दधानेषु शोभते । वयमश्रद्दधानास्स्मो ये युक्तिं प्रार्थयामहे ॥
[6]प्रतिप्रमातृविषयं परस्परविलक्षणाः । अपरोक्षं प्रकाशन्ते सुखदुःखादिवत् धियः॥ [7]सम्बन्धिव्यंग्यभेदस्य संयोगेच्छादिकस्य नः (च) । न हि भेदः स्वतो नास्ति नाप्रत्यक्षश्च संमतः ॥

---

1. एवं वस्तुभेदेपि वित्तिभेदो नास्तीत्युक्तम् । अथ वस्तुभेदोपि मिथ्येति वित्तिभेदसत्यत्वं दूरापास्तमित्याह **किञ्चेति । स्वतो नीरूपायाः** निराकारायाः । न हि भ्रम इत्यन्वयः। **अवग्रहो** वैशिष्ट्यमवगाहनं वा । 2. भेदो नाम न वस्तुस्वरूपम् ; वस्तुग्रहणमात्रेण भेदव्यवहाराभावात् । नापि वस्तुधर्मः, तुल्यन्यायेन वस्तुनि धर्मभूतभेदाद् भेदस्यापि धर्मतयाऽनवस्थापत्त्यादिदोषात् । न प्रत्यक्षः, प्रत्यक्षस्य सन्मात्रग्राहित्वात् । अत एव क्वचिदप्यप्रत्यक्षतया अगृहीतव्याप्तिरूपसंबन्धत्वात् अलैङ्गिकोपीत्यर्थः। श्रीभाष्यादावेतद्विस्तरः। 3. भ्रान्तिसिद्ध इत्यर्थः । 4. 5. **किञ्चेत्याद्योरनयोर्विवरणमात्मसिद्धौ ।**

6. **प्रती**त्यादिकारिकाद्वयं श्रु. प्र.जि. व्याख्यातम् । तत्र **नः** इत्यत्र **चेति** पाठः । श-दू. संविदद्वैतभङ्ग (३३) वादात् इह प्रायो विंशतेः कारिकाणामर्थो ग्राह्यः । 7. संबन्धिना आश्रयेणैव संयोगादेः संयोगाद्यन्तरात् भेदो ज्ञाप्यते । तावता न विश्वसंयोगैक्यम् ; एवमिच्छादावपीत्यर्थः ।

(नित्यविभुसंविदेकद्वयपक्षेऽनुपपत्तिः)

(14) यदि सर्वगता नित्या संविदेवा(का ?)भ्युपेयते । ततः सर्वं सदा भायात्, न वा किञ्चित् कदाचन॥ तदानीं न हि वेद्यस्य संनिधीतरकारिता। व्यवस्था घटते वित्तेः व्योमवत् वैभवाश्रयात् ॥ नापि कारणभेदेन, नित्यायास्तदभावतः । [1]न च स्वरूपनानात्वात्, तदेकत्वपरिग्रहात् ॥ ततश्च बधिरान्धादेः शब्दादिग्रहणं भवेत् । गुरुशिष्यादिभेदश्च निर्निमित्तः प्रसज्यते ॥

(संविद्भिन्नसर्वापलापेन शङ्का तत्खण्डनञ्च)

(15) ननु नरसंविदो भिन्नं सर्वं नाम न किञ्चन । अतः सर्वं सदा भायादित्यकाण्डेऽनुयुज्यते[2] ॥ इदमाख्याहि भोः किन्नु नीलादिर्न प्रकाशते । प्रकाशमानो नीलादिः संविदो वा न भिद्यते ॥ आदौ प्रतीतिसुभगो[3] निर्वाहो लोकवेदयोः । यतः पदपदार्थादि न किंचित् अवभासते ॥ द्वितीये संविदोऽद्वैतं व्याहन्येत समीहितम् । [4]यद्ययं विविधाकारप्रपञ्चः संविदात्मकः ॥ साऽपि संवित् तदात्मेति यतो नाना प्रसज्यते ।

(अविद्यादेर्भिन्नाभिन्नानिर्वचनीयत्वखण्डनम्)

(16) न [5]चाविद्याविलासत्वाद् भेदाभेदानिरूपणा। सा हि न्यायानलस्पृष्टा जातुषाभरणायते ॥

(तत्र अविद्येत्यत्र नञर्थविचारः)

(17) तथाहि—यद्यविद्येयं विद्याऽभावात्मिकेष्यते । निरूपाख्यस्वभावत्वात् सा न किंचिन्नियच्छति ॥ अर्थान्तरमविद्या चेत्, साध्वी भेदानिरूपणा ।
'अर्थानर्थान्तरत्वादिविकल्पोऽस्या न युज्यते। विद्यातोऽर्थान्तरं चासौ' इति सुव्याहृतं वचः ॥
अथार्थान्तरभावोऽपि तस्याः ते भ्रान्तिकल्पितः ।
हन्तैवं सत्यविद्यैव विद्या स्यात् परमार्थतः ॥ किंच शुद्धाऽजडा संवित्, अविद्येयं तु नेदृशी । तत् केन हेतुना सेयमन्यैव न निरूप्यते ॥

(अविद्यापदार्थगतविद्यास्वरूपशोधनम्)

(18) [6]अपिचेयमविद्या ते यदभावादिरूपिणी ॥
सा विद्या किन्नु संवित्तिर्वेद्यं वा वेदिताऽथवा । वेद्यत्वे वेदितृत्वे च [7]नास्यास्ताभ्यां निवर्तनम् ॥

---

1. ननु काचित् संवित् कञ्चिदेवार्थं भासयतीति स्वभावत एव व्यवस्थेत्यत्र, एवं संविद्भेदेऽपसिद्धान्त इत्याह नचेति । 2. 'न युज्यते' इति मुद्रितपाठः । 3. अनुभवानुगुण इति परिहासः । 4. इदं पञ्चिकायामपि (८.प्र) ब्रह्मसिद्धिखण्डनावसरे । 5. अविद्याया भिन्नाभिन्नानिर्वचनीयतया तद्विलासे नीलादावपि सेति नेत्यर्थः । इदमेवोक्तं (श. दू) 'अनिरूपितभेदाभेदाविद्याविलासदौर्घट्यविश्रमेऽस्मदुक्तदूषणाभ्युपगतिमन्तरेणापसर्पणासिद्धेः' इति । 6. अविद्येत्यत्र विद्याशब्दार्थः क इति विचारयति अपिचेति । 7. अविद्या यन्निवर्त्या सा हि विद्या । न च वेद्यवेदितृभ्यामविद्यानिवृत्तिर्लोके । प्रत्युत तयोरपि विद्यानिवर्त्यत्वात् न विद्यात्वमिति भावः ।

न हि ज्ञानात् ऋतेऽज्ञानमन्यतस्ते निवर्तते । संविदेवेति चेत् ; तस्या ननु भावादसम्भवः ॥
किंचेयं तद्विरुद्धा वा, न तस्याः क्वापि संभवः । यतोऽखिलं जगद्व्याप्तं विद्ययैवाद्वितीयया ॥
अभावोऽन्यो विरुद्धो वा संविदोऽपि यदीष्यते । तदानीं संविदद्वैतप्रतिज्ञां दूरतस्त्यज ॥

(अविद्याया आश्रयानुपपत्तिः)

(19) किंचासौ कस्य ? जीवस्य ; को जीवः ? यस्य सेति चेत् । नन्वेवमसमाधानमन्योन्याश्रयणं भवेत् ॥ न ते (नर्ते?) जीवादविद्या स्यात्, न च जीवस्तया विना । न बीजाङ्कुरतुल्यत्वं जीवोत्पत्तेरयोगतः ॥ (जीवाविद्यानिरासानन्तरं ब्रह्माविद्यानिरासः)

(20) [1]ब्रह्मणश्चेत्-न-सर्वज्ञं कथं तत् बम्भ्रमीति ते । अविद्याकृतदेहात्मप्रत्ययाधीनता न ते ॥
ब्रह्मसर्वज्ञभावस्य, तत्स्वाभाविकताश्रुतेः । [2]भेदावभासगर्भत्वात् अथ सर्वज्ञता मृषा ॥
तत एवामृषा कस्मान्न स्याच्छब्दान्तरादिवत् । यथा[3] शब्दान्तराभ्याससंख्याद्याः शास्त्रभेदकाः॥
भेदावभासगर्भाश्च यथार्थाः, तादृशी न किम् । सर्वज्ञे नित्यमुक्तेऽपि यद्यज्ञानस्य संभवः ॥
तेजसीव तमः तस्मात् न निवर्तेत केनचित् । सर्वज्ञत्वादिवचनप्रामाण्यं व्यवहारिकम् ॥
तात्त्विकं तु प्रमाणत्वमद्वैतवचसामिति । नियामकं न पश्यामो निर्बन्धात् तावकात् ऋते ॥
आश्रयप्रतियोगित्वे परस्परविरोधिनी । कथं चैकरसं ब्रह्म सदिति प्रतिपद्यते ॥
प्रत्यक्त्वेना[4]श्रयो ब्रह्मरूपेण प्रतियोगि चेत् । रूपभेदः कुतस्त्योऽयम् ; यद्यविद्याप्रसादजः॥
ननु सापि तदायत्तेत्यन्योन्याश्रयणं पुनः ।

(अविद्याया वस्तुत्वम्)

(21) अवस्तुत्वात् अविद्यायाः [नैतत् तद्दूषणं यदि] ॥
वस्तुनो दूषणत्वेन त्वया [5]क्वेदं निरीक्षितम् । ससा....उ (स्वसाध्यसिद्धव) त्कारात् दोषोऽन्योन्य-

---

1. 'किञ्चासौ कस्य' इति प्रश्ने ब्रह्मण इति समाधिमनूद्य निरस्यति ॥ अविद्येति किं ज्ञानसंसर्गाभावादिरुच्यते, उत ज्ञानान्योन्याभावः ? आद्ये आह सर्वज्ञमित्यादि । अन्त्ये वक्ष्यति **आश्रयप्रतियोगित्वे** इति । तदुक्तं शत. दू. १९. 'नापि ज्ञानान्योन्याभावः, ज्ञानान्तरानभ्युपगमात, स्वप्रतियोगिकभेदायोगाच्च' इति । 2. सर्वज्ञत्वं मिथ्या अयथार्थभेदावगाहित्वात् इति । 3. कर्म भेदकप्रमाणानि षट् पू. मी. द्वितीयाध्याये कथितानि । ददाति, जुहोतीत्यादौ शब्दान्तरम् ; समिधो यजति; तनूनपातं यजतीत्यभ्यासः ; तिस्र आहुतीर्जुहोतीति संख्या ; अथैष ज्योतिरथैष विश्वज्योतिरिति संज्ञा ; वाजिभ्यो वाजिनमित्युक्तः सा वैश्वदेव्यामिक्षेत्युक्तात् अन्यो गुणः; मासमग्निहोत्रं जुहोतीति नित्याग्निहोत्रतः प्रकरणान्तरमिति । एषां कर्मभेदकानां शास्त्रभेदकत्वपक्षानुसारेण **शास्त्रभेदकाः** इत्युक्तम् । तदुक्तम् श्रु.प्र.जि.'शास्त्रभेदः कर्मभेदो वा' इति । 4. विद्याभेदरूपाविद्याश्रयत्वं प्रत्यक्त्वेन रूपेण ; विद्यारूपस्य तस्य प्रतियोगित्वं ब्रह्मत्वेनेति । **पुनः** जीवाविद्यापक्ष इव । 5. तथा चैषां दोषाणां दोषता कुत्रापि न स्यात् । सर्वमिथ्यात्ववादिना चावस्तुन्येवैषां दोषत्वमेष्टव्यमिति ।

**समाश्रयः ॥ न** [1]वस्तुत्वात् ; **अवस्तुत्वात् इत्यतो नेदमुत्तरम् ।**

(अवस्तुत्वासिद्धिवचनम्)

(22) [2]**किञ्चाविद्या न चेत्** (वस्तु व्यवहारः कुतस्त्वयम्) ॥
(न चैष व्योम—(न चावस्तु ख) **पुष्पादिव्यवहारवदिष्य (दीक्ष्य) ते ।**
**'नाप्यवस्त्विति चो** [क्तिस्ते वस्तुतां तत्र साधयेत्] ॥
[निषिध्यते] **समस्तेन नञा वस्त्विति चेत्** [न तत्] । **समस्तेन नञा वस्तु प्रथमं यन्निषिध्यते ॥**
**प्रतिप्रसू**[3] (तं ?) **व्यस्तेन पुनस्तदिति वस्तुता ।**
**अतो न वस्तुना... ....॥ न कश्चकास्तीति विवक्षिर्या (र्वा) स्म जातुचित् ।** (अतो 'न वस्तु नावस्तु याऽविद्या तद्बले सति ॥ भेदो न कश्चकास्ति' इति विवक्षीर्मा स्म जातुचित् । ?)

(अविद्याया जीवस्य चैकत्वनानात्वविकल्पः)

(23) **किञ्च प्रपञ्चनिर्वाहजननी येयमाश्रिता ।**
**अविद्या, सा किमेकैव नैका वा तदिदं वद ॥ तदाश्रयश्च संसारी तथैको नैक एव वा ।**

(अविद्यैकत्वदूषणम्)

(24) **सा चेत् एका, ततः सैका शुकस्य ब्रह्मविद्यया । पूर्वमेव निरस्तेति व्यर्थस्ते मुक्तये श्रमः॥**

(शुकादिमुक्तिमिथ्यात्वेन एकाविद्यापक्षसमर्थनम्)

(25) **स्यान्मतम् नैव ते सन्ति वामदेवशुकादयः।** [4]**यद्विद्यया निरस्तत्वात् नाद्याविद्येति चोद्यते ॥**
**मुक्तामुक्तादिभेदो हि कल्पितो मदविद्यया । दृश्यत्वान्मामकस्वप्नदृश्यभेदप्रपञ्चवत् ॥**
**यत् पुनः ब्रह्मविद्यातस्तेषां मुक्तिरभूदिति । वाक्यं तत् स्वाप्नमुक्त्युक्तियुक्त्याप्रत्यूहता (युक्त्या प्रत्यूह्यता**[5] ?)**मिति ॥** (तत्खण्डनम्)

(26) **नन्वीदृशानुमानेन स्वाविद्यापरिकल्पितम् । प्रपञ्चं साधयत्यन्यः कथं प्रत्युच्यते त्वया ॥**

---

1. अन्योन्याश्रयदोषो हि स्वस्य स्वसाध्यापेक्षसिद्धित्वप्रयुक्तः, न तु वस्तुत्वप्रयुक्तः । अतः अवस्तुत्वादितीदं नोत्तरमिति । 2. सदसदनिर्वचनीयवादिना, 'अविद्या न वस्तु नाप्यवस्तु' इत्युच्यते । तत्र न वस्तु इत्यंशमत्र दूषयति, अवस्तुत्वात् इति हेतुरसिद्ध इति बोधनाय । इदमेव स्थापयति नाप्यवस्त्वित्यंशशोधनेनोपरितनकारिकाभ्याम् । खपुष्पादिव्यवहारो हि वस्तुशून्यः केवलं शब्दज्ञानानुपाती । न चैष लोकव्यवहारस्तादृशः । अन्यथा अवस्तुनि प्रपञ्च इव खपुष्पादावप्येवं विचित्रव्यवहारप्रसङ्गात् इति । द्वितीयरीत्या पाठक्लृप्तौ तु खपुष्पादीति पृथक्पदम् । तदा **व्यवहारवत्** व्यवहारविशिष्टम् । तथा चार्थक्रियाकारित्वात् वस्तुत्वमेवेति भावः । 3. तत्प्रतिप्रसवो नाम तन्निषेधनिषेधः । 4. **यद्विद्यया**-येषां वामदेवादीनां विद्यया । **चोद्यते**-शङ्क्यते । 5. **प्रत्यूह्यताम्** बाध्यताम् ।

त्वदविद्यानिमित्तत्वे यो हेतुस्ते विवक्षितः । स एव हेतुः तस्यापि भवेत् [1]सर्वज्ञसिद्धिवत् ॥
इत्यन्योन्यविरुद्धोक्तिव्याहते भवतां मते ।
मुखमस्तीति यत्किंचित् प्रलपन्निव लक्ष्यसे । यथा च स्वाप्नमुक्त्युक्तिस्वप्नदृशी तद्विमुक्तिगीः ॥
तथैव भवतोऽपीति व्यर्थो मोक्षाय ते श्रमः । यथा तेषामभूतैव पुरस्तात् आत्मविद्यया ॥
मुक्तिर्भूतोच्यते, तद्वत् परस्तादात्मविद्यया । अभाविन्येव सा मिथ्या भाविनीत्यपदिश्यताम् ॥
सन्ति च स्वप्नदृष्टानि दृष्टान्तवचनानि ते ।
ननु नेदमनिष्टं मे यत् मुक्तिर्न भविष्यति ॥ आत्मनो नित्यमुक्तत्वान्नित्यसिद्धैव सा यतः ।
तदिदं शान्तिकर्मादौ वेतालावाहनं भवेत् ॥ येनैवं[2]सुतरां व्यर्थो ब्रह्मविद्यार्जनश्रमः ।

(नित्यसिद्धमुक्त्यभिव्यक्तये यत्न इति शंका)

(27) अविद्याप्रतिबद्धत्वात् अथ सा नित्यसत्यपि ॥
असतीवेति तद्व्यक्तिर्विद्याफलमुपेयते । हस्तस्थमेव हेमादि विस्मृतं मृग्यते यथा ॥
यथा तदेव हस्तस्थमवगम्योपशाम्यति । तथैव नित्यमुक्तात्मस्वरूपानवबोधतः ॥
संसारिणस्तथाभावो व्यज्यते ब्रह्मविद्यया ।

(अभिव्यक्तिं विकल्प्य तत्परिहारः)

(28) हन्त केयमभिव्यक्तिर्या विद्याफलमिष्यते ॥
स्वप्रकाशस्य चिद्धातोर्या स्वरूपपदे स्थिता । संवित् , किं सैव, किंवाऽहं ब्रह्मास्मीतीति[3] कीदृशी ॥
यदि स्वरूपसंवित् सा, नित्यैवेति न तत्फलम् । अथ ब्रह्माहमस्मीति संवित्ति र्व्यक्तिरिष्यते ॥
ननु ते ब्रह्मविद्या सा सैव तस्याः फलं कथम् । किञ्च सा तत्त्वमस्यादिवाक्यजन्या भवन्मते ॥
उत्पत्तिमत्यनित्येति मुक्तस्यापि भयं भवेत् ।

(अविद्यायाः ब्रह्मधीप्रतिबन्धकत्वायोगः)

(29) अपिच व्यवहारज्ञाः सति पुष्कलकारणे ॥
कार्यं न जायते येन तमाहुः प्रतिबन्धकम् । इह किं तत् , यत् उत्पत्तुमुपक्रान्तं स्वहेतुतः ॥
अविद्याप्रतिबद्धत्वात् उत्पत्तिं न प्रपद्यते । न मुक्तिः नित्यसिद्धत्वात् ; न ब्रह्मास्मीति धीरपि ॥
न[4] हि ब्रह्माहमस्मीति संवित्पुष्कलकारणम् । संसारिणः तदास्तीति कथं सा प्रतिबध्यते ॥
यतः सा कारणाभावात् इदानीं नोपजायते । न पुनः प्रतिबद्धत्वात् ; अस्थाने तेन तद्वचः ॥

---

1. सर्वज्ञोऽस्तीति वादिनः सार्वज्ञ्यपादने सर्वज्ञो नास्तीति तन्निषेद्धुरपि तद्ज्ञानावश्यकतया सार्वज्ञ्यापत्तिः ; तत्रैवेत्यर्थः । यद्वा 'सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा । तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः' इति रीत्या एकमते सर्वज्ञसिद्धावन्यमतेपि सर्वज्ञान्तरसिद्धिः ; तत्रैवेत्यर्थः ।
2. एवंसति, मुक्तेर्भूतत्वस्येव भविष्यत्त्वस्याप्यभावे । 3. इति पक्षद्वये किंरूपेयमभिव्यक्तिरिति ।
4. अहं ब्रह्मास्मीति संविदो यत् पुष्कलं कारणं, तत् आदौ नास्तीति ।

(जीवैकत्वपक्षस्य पुनर्विशिष्य दूषणम्)

(80) [1]किंचैको जीव इत्येतत् वस्तुस्थित्या न युज्यते। अविद्या-तत्समाश्लेष-जीवत्वादि मृषा हि ते ॥ प्रातिभासिकमेकत्वं प्रतिभासपराहतम्। यतो नः प्रतिभासन्ते संसरन्तः सहस्रशः ॥
आसंसारसमुच्छेदं व्यवहाराश्च तत्कृताः। अबाधिताः प्रतीयन्ते स्वप्नवृत्त (त्तात्) विलक्षणाः॥
तेन[2] यौक्तिक[3]मेकत्वमपि युक्तिपराहतम्। प्रवृत्तिभेदानुमिता [4]विरुद्धमितिवृत्तयः ॥
तत्तत्स्वात्मवत् अन्येपि देहिनोऽशक्यनिह्नवाः। [5]यथाऽनुमेयाद्वह्न्यादेरनुमाना (?)विलक्षणाः ॥
प्रत्यक्षं (?) ते तथाऽन्येभ्यो जीवेभ्यो न पृथक् कथम्। न चेच्चेष्टाविशेषेण परो बोद्धाऽनुमीयते ॥
व्यवहारोऽवलुप्येत सर्वो लौकिकवैदिकः। न चौपाधिकभेदेन मेयमातृविभागधीः ॥
स्वशरीरेऽपि तत्प्राप्तेः शिरःपाण्यादिभेदतः। त (य?)था तत्र शिरःपाणिपादादौ वेदनोदये ॥
अनुसंधानमेकत्वे, तथा सर्वत्र ते भवेत्। [6]प्रायणान्न(ना)रकक्लेशात् प्रवृत्तिव्यसनादपि ॥
चिरातिवृत्ताः प्राग्जन्मभोगा न स्मृतिगोचराः। युगपज्जायमानेषु (मिथो ह्यस्मरणास्थितः) ॥
आश्रयासङ्करः, तत्र कथमैकात्म्यविभ्रमः[7]। (अविद्याजीवानेकत्वपक्षस्यापि दूषणम्)

(81) न च प्रातिस्विकाविद्याकल्पितस्वस्वदृश्यकैः ॥
जीवैरनेकैरप्येषा लोकयात्रोपपद्यते। परवार्तानभिज्ञास्ते स्वस्वस्वमैकदर्शिनः ॥
कथं प्रवर्तयेयुस्तां [8]सङ्घाद्येकनिबन्धनाम्।

---

1. किञ्चेत्यादयः कारिका उपदशाः शतदूषण्या(61-2)मर्थतोऽनूदिताः। 2. अबाधितप्रतीतिगोचरत्वात्मकसाम्यवैधर्म्यरूपयुक्तिसत्त्वेन। 3. यौक्तिकमिति विवादाध्यासितं चेतनजातमहं चेतनत्वात्, सर्वाणि शरीराणि मयैवात्मवन्ति शरीरत्वादित्यादियुक्तिकल्पितमित्यर्थः।

4. अनुमिताः। देहिन इति विशेष्यम्। 5 अनुमेयस्य स्वाभिन्नत्वेऽनुमानवैयर्थ्यम्, प्रत्यक्षसिद्धत्वात्। न च तेषां परोक्षत्वान्मिथोभेदप्रत्यक्षायोगः। तेषु परोक्षेषु स्वभेदप्रत्यक्षायोगेऽपि स्वस्मिन् प्रत्यक्षे तद्भेदप्रत्यक्षसंभवात् इत्याशयेनाऽऽह यथेति। अनुमानाः इतिच्छेदः। महानसादिगतवह्निव्यक्तीनां अनुमितिहेतु व्याप्तिग्रहोपयोगितया तद्विषयतया चानुमानत्वम्। अन्वयार्थश्चैवम्—अनुमेयपर्वतवह्न्यादिविलक्षणा अनुमापकवह्न्यादयो यथा, तथा अन्येभ्यो जीवेभ्यः पृथक् स्वस्वरूपं ते न प्रत्यक्षं किमिति। 'प्रत्यक्षस्ते' इति पाठान्तरे स्वस्वरूपमितिस्थाने त्वदात्मेत्यध्याहारः। विलक्षणा इति बहुवचनं भूयोदर्शनस्य व्याप्तिग्राहकस्य संभावितत्वाभिप्रायेण। अत्र 'यथाऽनुमेयाद्वह्न्यादेरनुमात्रा विलक्षणाः। प्रत्यक्ष्यन्ते तथा' इति पाठोप्यभ्यूह्यते। 6. अन्येऽपि अस्मरणहेतवो मूलभावप्रकाशिकायां दर्शिताः। भोगा इत्यत्र भेदा इति श्रु-प्र-पाठः। 7. वस्त्वेकत्वभ्रमः। 8. मिथस्समागमादिसत्त्व एव साध्याम्।

एवं संविदद्वैतखण्डनसिद्धान्तमारभ्य नीलादेः संविद्भेदाभेदविचारं प्रस्तुत्य तद्दुर्निरूपत्ववर्णनार्थप्रसक्ताविद्यादूषणेऽवतीर्य तत्स्वरूप—तदाश्रय—तद्वस्तुत्व—तद्गतप्रतिबन्धकत्व—तदेकत्वनानात्व—

(संविदः सधर्मकत्वादप्यद्वितीयत्वायोगः)

(32) किंच[1] स्वयंप्रकाशत्वविभुत्वैकत्वनित्यताः ॥
त्वदभ्युपेता बाधेरन् संविदस्तेऽद्वितीयताम् । [2]संविदेव न ते धर्माः सिद्धायामपि संविदि ॥
विवाददर्शनात् तेषु ; [3]तद्रूपाणां च भेदतः । न च ते भ्रान्तिसिद्धास्ते येनाद्वैतविरोधिनः ॥
तत्त्वाऽऽवेदकवेदान्तवाक्यसिद्धा हि ते गुणाः । आनन्दस्वप्रकाशत्वनित्यत्वमहिमाद्यथ[4] ॥
ब्रह्मस्वरूपमेवेष्टम्, तत्रापीदं विविच्यताम् । ब्रह्मेति यावन्निर्दिष्टं तन्मात्रं किं सुखादयः ॥
अथवा तस्य ते, यद्वा त एव ब्रह्मसंज्ञिनः । आद्ये तत्तत्पदाम्नानवैयर्थ्यं वेदलोकयोः ॥
पूर्वोक्तनीत्या भेदश्च ; जगज्जन्मादिकारणम् । अभ्युपेत्यैव हि ब्रह्म विवादास्तेषु वादिनाम् ॥
द्वितीये सैव[5] तैरेव ब्रह्मणस्सद्वितीयता । तृतीये ब्रह्म भिद्येत तन्मात्रत्वात् पदेपदे ॥
तत्समूहोऽथवा ब्रह्म तरुवृन्द विनाश (वनादि ?) वत् । [6]प्रकर्षश्च प्रकाशश्च भिन्नावेवार्क (?)-
वर्तिनौ ॥ तेन न क्वापि वाक्यार्थो [ऽ] [7]विभागोऽस्ति निदर्शनम् ।

(स्वयम्प्रकाशत्वादेर्व्यावृत्तिरूपत्वेपि दोषः)

(33) [8]जाड्यदुःखाद्यपोहेन यद्ये(दे ?)तत्रैव वर्तिता ॥
ज्ञानानन्दादिशब्दानां न सतः सद्वितीयता ॥
अपोहाः किं न सन्त्येव सन्तो वा नोभयेऽपि वा ।
सत्त्वे सत् सद्वितीयं स्यात् जडाद्यात्मकतेतरे । (सत्त्वे सत् सद्वितीयं स्यात् जडाद्यात्म [9]कृतेतरे ?) ॥
सदसद्व्यतिरेकोक्तिः पूर्वमेव परास्कृता । [10]तथात्वे च घटादिभ्यो ब्रह्मापि न विशिष्यते ॥
किञ्चापोह्य[11]जडत्वादिविरुद्धार्थासमर्पणे । नैव तत्तदपोहेन तदेकार्थैः[12]: पदैरिव ॥

---

तदाश्रयजीवैकत्वनानात्वानामनुपपन्नतां प्रदर्श्य संप्रति पराभिमतधर्मवशादपि संविदो नाद्वितीयत्वमित्याह

1. किञ्चेति । 2. ते धर्माः संविद्रूपा एव न भवन्ति । 3. हेत्वन्तरमाह ॥ नित्यत्वविभुत्वादेः मिथोभिन्नत्वाच्चेत्यर्थः । 4. **महिमा** महत्त्वं विभुत्वम् । 5. पूर्वोक्तैव । 6. 'सत्यादिवाक्यमखण्डार्थपरं समानाधिकरणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्' इति शतदूषण्याम् (३८. १५८. पु) । 7. निर्भाग इति पाठो वा, **विभागो** विगतभाग इत्यर्थो वा, अविभाग इतिच्छेदो वा । अखण्ड इति यावत् । 8. ज्ञानादिशब्दानां व्यावृत्तिपरत्वपक्षं शङ्कते जाड्येति ; अपोहा इत्यादिना तत्परिहारः । **वर्तिता**-वृत्तिः । 9. **कृतः** समाहितः पक्ष इतरो यस्मात् तस्मिन् असत्त्वपक्ष इत्यर्थः । बहुव्रीहित्वात् इतरपदमसर्वनाम । गतेतरे इति वा अन्यो वा कश्चित् पाठः स्यात् । 10. वक्ष्यति च, 'घटवत्सदसत्त्वाभ्यामनिर्वाच्यम्' (१४१. पु.) इति । 11. अपोह्यस्य जडत्वादेः विरुद्धभावरूपवत्तयाऽर्थस्याबोधने । 'लब्धरूपे क्वचित्किञ्चित् तादृगेव निषिध्यते' (ब्र. सि ) इति त्वयैव किञ्चिद्रूपविशिष्टतया प्रतिपन्ने एव किञ्चिद्रूपविशिष्टस्यैव व्यावृत्तिर्बोधयितुं शक्येत्युक्तत्वात् इति भावः । 12. **तदेकार्थैः** धर्मिमात्रार्थकैः, यद्वा निषेधमात्रार्थकैः । न खल्वनुयोगिप्रतियोगिरूपद्वयाभावे निषेधकथेति भावः ।

[1]प्रतियोगिनि दृश्ये तु या भावान्तरमात्रधीः। सैवाभाव इतीहापि सद्भिस्ते सद्वितीयता ॥

(प्रपञ्चस्यापि सदसद्व्यतिरेकित्वायोगः)

(34) भूतभौतिकभेदानां सदसद्व्यतिरेकिता। कुतोऽवसीयते? किन्नु प्रत्यक्षादेरुताऽऽगमात् ॥
प्रत्यक्षादीनि मानानि स्वंस्वमर्थं यथायथम्। व्यवच्छिन्दन्ति जायन्त इति यावत् स्वसाक्षिकम् ॥
यथाऽग्रतः स्थिते नीले, नीलिमान्यकथा न, धीः। [2]एकाकारा; न हि तथा स्फटिके धवले
मतिः ॥ क्षीरे मधुरधीर्यादृक् नैव[3] (वं?) नि (शि) म्बकषायधीः। [4]व्यवहाराश्च नियताः
सर्वे लौकिकवैदिकाः ॥ सत्यं प्रतीतिरस्ति; अस्या मूलं नास्तीति चेत्-न तत्।
सा चेदस्ति तया मूलं कल्प्यतां कार्यभूतया ॥ बलमश्चेन्द्रियलिङ्गादि तद्भावानुविधानतः।

(प्रत्यक्षस्य व्यवच्छेदकत्वायोगखण्डनम्)

(35) [5]यौगपद्यक्रमायोगात् व्यवच्छेदविधानयोः ॥
ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः। भेदेतरेतराभावविवेका(धीवेगा)ग्रहणेन सः ॥
स्वरूपमेव भावानां प्रत्यक्षेण परिस्फुरत्। भेदव्याहारहेतुः स्यात् प्रतियोगिव्यपेक्षया ॥
यथा तन्मात्रधीर्नानानास्तिव्याहारसाधनी। ह्रस्वदीर्घत्वभेदा वा यदै (थै?) कत्र षडङ्गुले ॥
एवं व्यवस्थितानेकप्रकाराकारवत्तया। प्रत्यक्षस्य प्रपञ्चस्य त [8](स?) द्भावोऽशक्यनिह्नवः ॥
[9]आगमः कार्यनिष्ठत्वादीदृशेऽर्थे न तु प्रमा। प्रामाण्येऽप्यन्वयायोग्यपदार्थत्वान्न बोधकः ॥
[10]नासत् प्रतीतेः, बाधाच्च न सदित्यपि यन्न तत्। प्रतीतेरेव सत् किन्न, बाधान्नासत् कुतो
जगत् ॥ तस्मादविद्ययैवेयमविद्या भवताऽऽश्रिता।

---

1. 'यदि घटः स्यात्, सोपि दृश्येत, योग्यत्वात्। अतो दृश्ये घटे यत् भूतलमात्रविषयं ज्ञानं तत् 'घटोऽत्र भूतले नास्ति' इति व्यवहारकारणम्। अतो नाभावरूपं किञ्चित्प्रमेयम्' (शा. दी. १-१-५) इति मतानुसारेणेदम्। **इतीहापि** इत्यस्मिन् पक्षेपि। यदि 'केवलब्रह्मज्ञानमेवापोहः, नान्य इति' पूर्वपक्षी मन्येत, तदापि ज्ञानरूपैरेवापोहैः सद्वितीयत्वमवर्जनीयमिति। अपीत्यनेन वस्तुतो ब्रह्मरूपधर्मिज्ञानमात्रेण जडाद्याशङ्कानामनिवृत्त्या भावरूपत्वेप्यपोहस्य ब्रह्मगतकिञ्चिद्धर्मात्मकत्वमेवेति सूच्यते **व्यवच्छिन्दन्तीति** शब्दान्तम्। 2. नील इत्येकाकारैव नीले धीः; न तु नीलिमान्यस्य कथापि। 3. कषायधीर्नैव मधुरविषयिणी। 4. प्रतीतिनियममुक्त्वा व्यवहारनियममाह। 5. **व्यवच्छिन्दन्ति जायन्त** इत्युक्तमयुक्तमित्याक्षेपं निरसितुमनुवदति। अयमर्थो **ब्रह्मसिद्धौ** (२, १७) 'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः' इत्यादौ द्रष्टव्यः। अनेन च न **वस्तु वस्तुधर्मो वे**(१३०)त्युक्तं निरस्तं भवति। **विधानं** स्वरूपग्रहः, **व्यवच्छेदो** भेदग्रह इति **तत्त्वटीका**। विधानकार्यत्वात् व्यवच्छेदस्य न यौगपद्यम्। क्षणिकत्वात् प्रत्यक्षस्य न क्रमेण स्वरूपभेदग्राहित्वे। 8 (?) **तद्भावः** तादृशाकारवत्त्वम्। 9. प्रत्यक्षं विचारितम्। आगमात् सदसद्व्यतिरेकसिद्धिमपास्यति। 10. अनुमानस्यासाधकत्वमाह।

(मिथ्यात्वमिथ्यात्वविचारेण जगत्सत्यत्वस्थापनम्)

**(86) किञ्च भेदप्रपञ्चस्य धर्मो मिथ्यात्वलक्षणः ॥**

**मिथ्या वा परमार्थो वा नाद्यः कल्पोऽयमञ्जसा । तन्मिथ्यात्वे प्रपञ्चस्य सत्यत्वं दुरपह्नवम् ॥**
**पारमार्थ्येऽपि तेनैव[1] तवाद्वैतं विहन्यते । [2]सर्वाण्येव प्रमाणानि स्वंस्वमर्थं यथोदितम् ॥**
**असतोऽर्थान्तरेभ्यश्च व्यवच्छिन्दन्ति भान्ति नः । तथाहीह घटोऽस्तीति येयं धीरुपजायते ॥**
**सा तदा तस्य नाभावं पटत्वं वाऽनुमन्यते । [3]नन्वस्तीति यदुक्तं किं तन्मात्रं घट इत्यपि ॥**
**अर्थान्तरं वा तन्मात्रे सदद्वैतं प्रसज्यते । अर्थान्तरत्वे सिद्धं [4]तत् सदसद्भ्यां विलक्षणम् ॥**
**यद्येवम्[5], अस्ति ब्रह्मेति ब्रह्मोपनिषदं मतम् । घटवत् सदसत्त्वाभ्यामनिर्वाच्यं तवाऽऽपतेत् ॥**
**आनन्दसत्यज्ञानादिनिर्देशैरेव वैदिकैः । ब्रह्मणोऽप्यतथाभाव[6]स्त्वयैवैवं समर्थितः ॥**
**सदसद्व्यतिरेकोक्तिः प्रपञ्चस्य च [7]हीयते । यत् यथा किञ्चिदुच्येत तत् सर्वस्य तथा भवेत् ॥**
**[8]तस्मात् अस्तीति संवित्तिर्जायमाना घटादिषु । तत्तत्पदार्थसंस्थानपारमार्थ्यावबोधिनी ॥**
**सजातीयविजातीयव्यवच्छेदनिबन्धनैः । [9]स्वैस्वैर्व्यवस्थितै रूपैः पदार्थानां तु या स्थितिः ॥**
**सा सत्ता ; न स्वतन्त्राऽन्या ; तत्राद्वैतकथा कथम् । न च नानाविधाकारप्रतीतिः शक्यनिह्नवा ॥**

(धर्मनिषेधेऽपि सधर्मकतया सद्वितीयत्वम्)

**(87) [10]न वेद्यं वित्तिधर्मस्स्यादिति यत् प्रागुदीरितम् । तेनापि साधितं किंचित् संविदोऽस्ति न वा त्वया ॥ अस्ति चेत् पक्षपातः ([11]बाधः) स्यात् न चेत् ते विफलः श्रमः॥ अतः स्वरसविस्पष्टदृष्टभेदास्तु संविदः ॥ यथास्था (रथा) दिभिर्वा (र्बा) ह्यैर्नैक्यं याति (यथाव[12](वत्) स्थायिभिर्बाह्यैर्नैक्यं यान्ति ?) घटादिभिः ।**

---

1. ब्रह्मातिरिक्तपरमार्थमिथ्यात्वसत्त्वेनैव । 2. न तु मिथ्यात्वप्रमाणमात्रं ब्रह्मप्रमाणमात्रं वा । *अत्रान्यादृशः कारिकापाठक्रमो मुद्रितग्रन्थस्थोऽशुद्धः ।

3. घटोस्तीत्यत्र घटशब्दवाच्यमस्तिशब्दवाच्यसन्मात्रब्रह्मणोऽनन्यदन्यद्वा । आद्ये पटोस्तीत्यादावप्येवमिति सदेकतत्त्वसिद्धि. । 4. घट इत्येतत् । 5. समानाधिकरणास्तिपदार्थात् घटपदाद्यर्थस्य भिन्नत्वे । 6. आनन्दो ब्रह्मे.य.चैरानन्दादिभिन्नता । 7. सदसद्व्यतिरिक्तः प्रपञ्च इति प्रयोगे तद्भेदस्यैव प्रपञ्चे सिद्धेः । 8. ननु तर्हि समानाधिकरणस्थलेऽभेदस्यैव बोध्यत्वात् कथं सदद्वैतासिद्धिरित्यत्र अस्तीति न ब्रह्मोच्यते, किन्तु घटादिपरतन्त्रो धर्म इति वदन्निगमयति **तस्मा**दिति । 9. स्वैरित्यादिकारिका शतदूषण्यां ६१ वादेऽन्ववादि । 10. एवं प्रत्यक्षादिप्रतीतेः विधायकत्ववत् व्यवच्छेदकत्वस्यापि संभवात्, सत्त्वेन प्रतीतेषु सदसद्व्यतिरेकित्वायोगाच्चापोह्यानामपि सदसद्व्यतिरेकित्वायोगात् सर्वथा स्वयंप्रकाशत्वादिभिस्सद्वितीयत्वमित्युक्त्वा प्रकारान्तरेणापि तदाह **ने**ति । 11. पक्षपात इति श्रु. प्र. पाठः । निर्धर्मकत्वस्यैवान्येषामपि धर्माणां प्रमाणसिद्धत्वे तदेकमात्रस्वीकारे **पक्षपात** इति । **पक्षबाध** इति पाठे अद्वितीयत्वसिद्धान्तभङ्ग इत्यर्थः । 12. यथावस्थितैः । **बाह्यै**-

[1]सहोपलंभनियमो न खल्वेकैकमंविदा। न चेदस्ति समामान्यं सर्वं संवेदनास्पदम् ॥

(सहोपलम्भनियमेन ग्राह्यग्राहकापलापः पूर्वपक्षिणः)

(४४) [2]सहोपलंभनियमान्नान्योऽर्थः संविदो भवेत् ॥

यदेतदपराधीनस्वप्रकाशं तदेव हि। स्वयंप्रकाश (?) ताशब्दमिति वृद्धाः प्रचक्षते ॥

यस्मिन्नभासमाने हि यो नामार्थो न भासते। नासावर्थान्तरस्त (रं त ?) स्मान्मिथ्येन्दुरिव चन्द्रतः ॥ अभासमाने विज्ञाने न [3]चात्मार्थावभासनम्। इति संविद्विवर्तत्वं प्रपञ्चः स्फुटमश्नुते ॥

(तत्खण्डनम्)

(४७)....मैवं (मा नामैवं ?) परिभवः; प्रत्यक्षेण बलीयसा। संरक्ष्यमाणभेदास्ते नानुमानानुवर्तिनः ॥ तथाहीदमहं वेद्मीत्यन्योन्यानात्मना स्फुटम्। त्रयं साक्षाच्चकास्तीति सर्वेषामात्मसाक्षिकम् ॥ प्रत्यक्षप्रतिपक्षश्च नानुमानं प्रवर्तते। न हि वह्नेरनुष्णत्वं द्रव्यत्वादनुमीयते ॥ किञ्च हेतुर्विरुद्धोऽयं सहभावो द्वयोर्यतः। तथाहि नतु हि [तथापि नहि ?] (तथाहि-न हि ?) संवित्तिः स्वात्मना सह भासते ॥ 'नीलाद्युप्लवापेतस्वच्छचिन्मात्रसन्ततिः। स्वापादौ भासते, नैवमर्थस्संवेदनात्पृथक् ॥ तेन संवेदनं सत्यं संवेद्योऽर्थस्त्वसन्' इति। तदेतदपरामृष्टस्ववाग्बाधस्य जल्पितम् ॥ सहोपलंभनियमो येनैवं सति हीयते। [4]यस्मादृते यदाभाति भाति य (त ?) स्मादृतेऽपि तत् ॥ घटात् ऋतेऽपि निर्भातः [5]पटादिव घटः स्वयम् ॥

(इतः परः संवित्तिसिद्धिग्रन्थो नोपलभ्यते)

नमो नमो यामुनाय यामुनाय नमो नमः।
नमो नमो यामुनाय यामुनाय नमो नमः॥

॥ श्रीरस्तु ॥

---

रित्यनेन आन्तरसंविद्द्वैलक्षण्यं दर्श्यते। अत्र मीमांसाकृता निरालम्बनवाददूषणसरणिरभिप्रेता। अत एव समनन्तरमेतदसहमानस्य सहोपलम्भनियमावलम्बनेन पुनरुत्थानम्। । 'सहोपलम्भनियम' इति, 'नचेत्' इति चार्धद्वयं विनैव क्वचित्तालकोशे पाठः। अस्य च सहोपलम्भपक्षदूषणपरत्वात्, उपर्येव पूर्वपक्षप्रस्तावात्, ततःपश्चाद्यत्र क्वापि तत्खण्डनग्रन्थमध्ये निवेशः स्वरसः। नचेदित्यस्य, 'माभूदिति चेत्—तर्हि' इत्यर्थः। यद्वा सौगतैस्सामान्यापलापात् संवेदनास्पदं सर्वं ससामान्यं न चेत्, संविदः कथमप्यनुगमायोगादेकैकसंविदैव सहोपलम्भनियमो वाच्यः; स चासंभवीति विशिष्टार्थः। अयमर्थः आ. सि.। २. शङ्कते सहेत्याद्यर्धसप्तकेन। 'सहोपलम्भनियमात् अभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैः दृश्य इन्दाविवाद्वये' इति बौद्धः। ३. आत्मार्थावभासनम्--ग्राहकस्यात्मनो ग्राह्याणामर्थानाञ्च भानम्। ४ यस्माद्वस्तुनः यत् ज्ञानम्। तस्मात् ज्ञानविशेषात्। तत् वस्तु। 5. निर्भात इति शत्रन्तात् पञ्चमी। घटं विनापि भासमानात् पटात् ऋते घट इव भातीत्यन्वयः ॥

एतदुपरि सर्वो ग्रन्थो नष्टः। अद्वितीयश्रुतिविमर्श-सत्त्वासत्त्ववाद-तत्त्वमसिविचारेभ्यः पश्चात्प्रवर्तितो यो विस्तरेण संविदद्वैतपूर्वपक्षः, तस्य खण्डनमेतावतापि न समाप्तम्। प्रत्यक्षानुमित्यादिरूपेण विचित्राणां संविदां प्रमातृभेदात् विषयभेदाच्च भेदं सिद्धान्तारम्भे प्रदर्श्य, तदुपरि सर्वापलापाय प्रस्तुताया अविद्यायाः स्वरूपादि प्रदूष्य, ततः संविदस्सधर्मकत्वादपि संविदद्वितीयत्वं दुर्वचमित्यारभ्य, धर्माणामपोहरूपाणां सदसद्व्यतिरेकप्रसङ्गे प्रपञ्चसदसद्व्यतिरेकमेव निरस्य, एवं संविद्धर्माणां विषयप्रपञ्चस्य च वास्तवतया सर्वापलापायोगमभिधाय, पुनर्बौद्धसरण्या संविदतिरिक्तनिरसनाय सहोपलम्भनियमप्रस्तावे तत्खण्डनमत्र क्रियते। एतत् समाप्य शिष्टं संविदद्वैतपूर्वपक्षिप्रस्तुतांशसमाधानं वक्तव्यमस्तीति ॥

उपक्रमादिलुप्तांशलिप्सया त्रियमादिमा। संवित्सिद्धिर्मातृकादिक्रमाचान्ते परिष्कृता ॥ १ ॥
अभिनन्दन्ति बालस्य स्खलतोपि पदक्रमम्। भ्रान्तेः पुरुषधर्मत्वात् तृप्येद्दृष्ट्वैव कः पुनः॥ २ ॥
स्वोक्तमप्युज्झयते स्वेन सता दुष्टं परैः किमु। गुणश्लाघिबुधप्रीत्यै गुरुभक्त्योद्यतं मया ॥ ३ ॥
इत्थं विरचितानेकशास्त्रसाहित्यवाङ्मयः। तर्कार्णवाद्युपाख्यो यस्सोऽहं श्रीवीरराघवः ॥ ४ ॥
प्रणीतानेकसुश्लाघ्यप्रबन्धैर्गुणभूषणैः। यतीन्द्रैः प्राज्ञसच्छिष्यबृन्दस्तुतपदाम्बुजैः ॥ ५ ॥
**श्रीरङ्गलक्ष्मणाभिख्यैः**रस्मत्परयामुनैः। देशिकैर्बोधिताशेषगूढार्थो यैर्दयाघनैः ॥ ६ ॥
लम्भितोभयमीमांसावल्लभाख्यश्च संसदि। एषां षष्ट्यब्दसंपूर्तिमहसत्कारकाम्यया ॥ ७ ॥
प्रत्नं **सिद्धित्रयं** प्रौढं भगवद्यामुनोद्धृतम्। सुहृत्संप्रेरितः प्रीत्या परिष्कृत्य स्वकीयया ॥ ८ ॥
**गूढप्रकाश**टिप्पण्या संयोज्याद्य समर्पये। दैवतं ये ममैतेभ्यो गुरुभ्यो रोचतामिदम् ॥ ९ ॥
वाञ्छा परं भवति वक्तुमनुक्तमन्यैः एवं विचिन्त्य कथितश्च परत्र दृश्यम्।
दृश्यं न यत् तदपि बाध्यमबाधितश्च प्राज्ञो न मृष्यति परस्तु न वेत्ति किञ्चित् ॥ १० ॥
'यतिपतिरवधत्ते यामुनार्यस्स्वयं वा' इ(वे)त्यनघनिगमचूडासूरिसूक्तप्रकारा।
क्व तु कृतिरियमीदृक् क्वाहमज्ञोऽन्यसक्तः कथमपि गुणमन्विष्यात्र तुष्यन्तु सन्तः ॥ ११ ॥

वेधोजिह्वाग्रवासिन्यपि भवति कला भारती यस्य, यस्य
स्वास्थानं भाति नित्यं निरवधिमहिमाचार्यजिह्वा स देवः।
सचित्तक्षेत्ररूढस्वकचरणयुगीभक्तिवल्लीप्रसूतैः
तत्त्वज्ञानप्रसूनैः जनमिह निखिलं वासयेद्वाजिवक्त्रः ॥ १२ ॥

इति श्रीवात्स्य वीरराघवाचार्य विरचितम्
**गूढप्रकाशाख्यम्**
सिद्धित्रयटिप्पणम्।
श्रीमते रङ्गरामानुजमहादेशिकाय नमः
॥ शुभमस्तु ॥

अर्थानुवादः शतदूषणीस्थः प्रागेव सिद्धेरुपदर्शितोऽस्याः ।
शब्दानुवादाः स्वमेव दृश्या ये न्यायसिद्धाञ्जन आत्मसिद्धेः ॥
उपोद्घातं पृथग्द्रष्टुमुत्सहन्ते न वैदिकाः ।
तत्तसिद्धिमुखेऽन्तश्च तदर्थोऽतो व्यभज्यत ॥
न यत्र चिह्नं निरदेशि किञ्चिन्न टिप्पणादावपि यद् व्यचारि ।
तत्रान्यथापाठ इह प्रक्लृप्तस्तालानुरोधादिति भावनीयम् ॥
स्वैरं न पाठोऽन्यथितो मयेह प्रदर्श्य दृष्टां स्थितिमन्यरीतिः ।
यथार्हमावेदि मनाक् अशेषं धिया च कोशैर्विमृशन्तु सन्तः ॥
यद् ब्रह्मसिद्धिः स्फुटमिष्टसिद्धिनैष्कर्म्यसिद्धिश्च निरस्यतेऽत्र ।
विमृश्यते तन्त्रगपञ्चिकादिग्रन्थश्च तत्तादृगिहाभिनन्द्यम् ॥

॥ शुभमस्तु ॥

---

अस्य सिद्धित्रयस्य निर्माता श्रीभगवद्यामुनमुनिः कवेरजाभागपरिसरप्रख्यातश्रीवीरनारायण-(काट्टुमन्नारगुडि) पुराभिजनस्य बाह्यकुदृष्टिनिरसनेन स्वमतस्थापनाय न्यायतत्त्वं शास्त्रं भगवत्तद्भक्त साक्षात्कारानुभवसंपत्तये योगरहस्यञ्च प्रणीतवतो योगिसार्वभौमस्य श्रीभगवन्नाथमुनेः पौत्रः ईश्वरमुनि-पुत्रः चोलराजास्थानपण्डितं विजित्य प्राप्तार्धराज्यः पितामहशरणादिष्टेन तच्छिष्येण श्रीपुण्डरीकाक्ष-सूरिणा स्वाशक्त्यवस्थामालोक्य स्वशिष्य श्रीराममिश्रमुखेन विबोधितविशेषार्थस्त्रिदण्डधारी परमतनिर-सनादिना परिरक्षितवेदवैदिकः स्वस्य स्थाविरे श्रीभगवद्रामानुजमनुगृह्य तन्मुखेन स्थापितपुरातनसिद्धान्तः (आङ्गलवत्सरगणनया एकादशद्वादशशतकमध्यकाले लब्धाभ्युदयः) ; येन हि विजयप्रस्थाने विशिष्य घोषिताविमौ श्लोकाविति संप्रदायः—

'न वयं कवयस्तु केवलं न वयं केवलतन्त्रपारगाः ।
अपितु प्रतिवादिवारणप्रकटाटोपविपाटनक्षमाः ॥'
'आ शैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात्
आ रक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।
आ च प्राच्यप्रतीच्यक्षितिधरयुगलादर्कसोमावतंसात्
मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः ॥' इति ॥

एतच्चरितं विशिष्य दिव्यसूरिचरितकाव्यादौ द्रष्टव्यम् । **एतदनुगृहीताश्च प्रबन्धाः-श्री चतुःश्लोकी,** स्तोत्ररत्नम्, आगमप्रामाण्यम्, गीतार्थसंग्रहः, पुरुषनिर्णयः, सिद्धित्रयञ्च । अत्र पुरुषनिर्णयः सर्वथैव नोपलभ्यते ; शिष्टेषु च सिद्धित्रयादन्ये ग्रन्थाः सामग्र्येण लब्धास्सम्यगेव परिष्कृत्य मुद्रितास्समुल्लसन्ति ।

श्रीभगवद्यामुनमुनये नमः

॥ श्रीरस्तु ॥ शुभमस्तु ॥ उभयवेदान्तग्रन्थमालासंपादकः ॥

## द्वितीयसंस्करणमिदम्

1942 संवत्सरे मुद्रितस्यास्य पुनरीदानीं 1971 संवत्सरे उभयवेदान्तग्रन्थमालायां पुनर्मुद्रणम्। प्रथममुद्रणे-मातृकात्वेनोपयुक्तं काश्यां मुद्रितं देवनागरलिपिपुस्तकम् ; आन्ध्रलिपिपुस्तकञ्च । (तिरुपति) श्रीवेङ्कटेशप्राच्यविद्यापुस्तकभाण्डागारस्थो ग्रन्थाक्षरतालकोशोऽप्यान्तमवैक्षि। मद्रनगरराजकीय पुस्तकभाण्डागारस्थिताश्च कोशास्तत्रतत्र यथावसरमलोकिषत ॥ अत्र योजनाय समुचितटिप्पणनिर्माणेन, पाठशोधनेन, स्थितपाठार्थविमर्शनेन, विषयविभजनेन, विशेषचिन्तनेन, फक्किकाविभागेन, प्राचीन-ग्रन्थसंवादानुवादप्रदर्शनेन च यथाशक्ति प्रेक्षावतां प्रीणनाय सुबहु व्यापृतम्। फलांशे तु सन्तः प्रमाणम्। अधिकं तु सतामादरात् पुनर्मुद्रणे प्रतीक्ष्यमित्यावेदितमत्राप्यनुसंधेयम् ॥

---

## सिद्धित्रय — टिप्पण निर्दिष्टनामसूची

(गीतापुराणोपनिषद्विषयनामसूचनं तु न)

(१)

इष्टसिद्धि. सौरेश. नै. सि. ब्रह्मसिद्धि न्यायद. वा. टी. न्यायद. योगसूत्र व्याकरण. न्यायतत्त्व. न्या. सिद्धाञ्जन. श्रु. प्रकाशिका. तत्त्वटीका. मीमांसा. नयविवेक. शास्त्रदीपिका. प्रभाकर विजय. वैशे. दर्शन. बार्हस्पत्य. योगभाष्य. वेदार्थसंग्रह. ता. चन्द्रिका. कूरनारा. भा. प्रश. भा. कुसुमाञ्जलि. न्यायरत्नाकर. आगम. प्रा. सर्वार्थसिद्धि. रहस्य. त्र. सा. तत्त्वकौमुदी. मूलभावप्र. न्यायकुलिश.

प्रकरण पञ्चिका. श्रीभाष्य. श. दू.

(२) बादरायण. द्रमिडभाष्यकार. श्रीवत्साङ्कमिश्र आचार्यटङ्क भर्तृप्रपञ्च भर्तृमित्र भर्तृहरि ब्रह्मदत्त शङ्कर श्रीवत्साङ्क भास्करादिः बोधायनः नाथमुनिः निगमान्तदेशिकः सत्यतपाः प्रकटाः प्रच्छन्नाः विमुक्तात्मा. तद्वार्तिककार. अक्षपाद. पाणिनि. पतञ्जलिः कणभक्ष. मनु. सूत्रकार चोलनृप शौनक. कूरेश नन्दीश्वर. शालिकनाथ. भवनाथ सुरेशादयः

## आ क र सू ची

| | आ. | | आ. |
|---|---|---|---|
| अकायमव्रण | ई. उ. ८ | असत्प्रत्यये | ? |
| अथयोवेद | छा. ८. १२. ३ | अहमेवच | अ. शिरसि. |
| अनुभवादू | न्यायतत्त्वे | अहं बीज | गी. १४. ४ |
| अन्नमयं | छा ६. ५. ४ | आत्मज्योति | बृ. ६. ३. ६ |
| अप्रामाण्य | सुरेश्वरवार्तिक ? | आत्मधर्म | ? |
| अभावप्रत्य | यो. सू. १. १० | आत्मनश्चे | नै. सि. २.३२ |
| अविभागो | बौद्धग्रन्थे ? | आदावन्तेपि | ? |

| | | | |
|---|---|---|---|
| आपोमय: | छ. ६. ५. ४ | द्रष्टुश्चक्षु | व. पु. ९८ |
| इच्छाद्वेष प्र | न्या. सू. १. १. १० | नजायते | गी. २. २० |
| इच्छाद्वेषस्तु | गी. १३ ६ | विपश्चिदितिपाठे-क | उ. २. १८ |
| इन्द्रियाणां | म. स्मृ. २. ९९ | नपश्यो | छा. ७.२६ |
| उदरमन्तरं | तै आन. २. ७ | नविज्ञातु: | बृ. उ. ६. ३. ३० |
| एकमेवा० | छा. ६. २. १ | नहवैसं | छा. ८. २२. १ |
| एतावानस्य | पु. सू. | नहिद्रष्टु | बृ. उ. ६. ३. २३ |
| एवमेवास्य | प्र. उ. ६. ५ | नह्यजं | इष्टसिद्धि |
| एषहिद्रष्टा | प्र. उ. ४. ९ | नाशकद् | केनोपनिषदर्थ: |
| कतमआत्मेति | बृ. उ. ३. ७ | नास्त्यकृत: | मु. उ. १. २. १२ |
| कामस्संकल्प | बृ. ३. ५ ३ | नास्यामेयो | इष्टसिद्धि |
| क्षीयन्ते | मु उ. २. २ ९ | निर्वाणमय एव | वि. पु. ६. ७. २२ |
| चेतनाधृ | गी. १३. ६ | नोपजनं | छा. ८. १२. ३ |
| जानात्येवा | बृ. ४. ४. १४ | परागर्थ | सुरेश्वरवार्तिक ? |
| | आ. | पराञ्चि | क. उ. २. ४. १ |
| जीवापेतं | छा. ६. १. ३ | पादोस्य | पु. सू. |
| ज्योतिषामपि | इतिहा० | पृथगात्मानं | श्वेताश्व १ |
| ज्ञोत एव | ब्र. सू. २. ३. १९ | पृथिव्याप | बृहस्पतिसू. |
| तत्त्वमसि | छा. ६. ८. ८ | प्रज्ञानं ब्र. | ऐ. उ. ३. १. ३ |
| तथाहेय | श्रीविष्णुधर्मे १०३ | बहुस्यां | छा. ६ २. ३ |
| तदस्य | गी. २. ३७ | ब्रह्मविदा | तै. आन १ |
| तदाविद्वा | मु. उ. ३. १. ३ | मनसैतान् | छा. ८. १२. ५ |
| तद्वैतत्प | बृ. उ. ३. ४. १० | मनसैवज | वि. पु. ५ २२. १५ |
| तद्यथेह | छा. ८. १. ६ | मनोऽस्य | छा. ८. १२. ५ |
| तरतिशो | छा. ७. १. ३ | महाभूतान्य | गी. १३. ५ |
| तस्माद्वा | तै. आन. ४ | मानस्वयप्र | ? |
| तानिसर्वाणि | वि. पु. १. २२. ८३ | मेरोरिवाणु | ? |
| तेषामहं | गी. १२. ७ | यत्रान्यन्न | छा. ७. २४ |
| देवावैकारिका: | वि. पु. १. २. ४७ | यथानक्रिय | श्रीविष्णुधर्मे १०३ |

## का रि का सू ची

**आ त्म सि द्धिः**



**ई श्व र सि द्धिः**



**संवित्सिद्धेः कारिकामयत्वात् बाहुल्यात् तत्कारिकासूची न विधीयते ।**

पंक्त्यारम्भदर्शनादेव तज्ज्ञानं सुकरम् ।

## विषयसूची.



सर्वाचार्यनिबन्धरत्नसरसव्याख्यानवैचक्षणीविख्यातः प्रतिपक्ष विश्रुतबुधच्छात्रव्रजाभिष्टुतः।
भक्तेर्धाम विरक्तिशेवधिरयं वृत्ताधिको द्योतते मीने लब्धजनुर्वृषे गुरुवरः श्रीरङ्गरामानुजः ॥१

श्रीमद्वेदान्तरामानुजमुनिकृपया सार्वभौमीं समृद्धिं
संप्राप्तस्तद्गुरूणामपि सह यशसा नाम बिभ्रत्, दिशश्च ।
अर्थं सन्तं श्रितेभ्यः, कृतिभिरपि परित्राणमुख्याभिरत्र
ख्यातस्मद्वृन्दवन्द्यो जयति यतिनृपो रङ्गरामानुजाख्यः ॥ २ ॥
एतत्पादाब्जभक्तव्रज इह सुगुरोरस्य षष्ट्यब्दपूर्ति-
प्रज्ञानार्थं प्रबन्धप्रकटनमभिसंमत्य विश्वाभिनन्द्यम् ।
संमुद्र्य ग्रन्थरत्नं सपदि गुरुकृतं भेदसाम्राज्यसंज्ञं
सर्वप्राचीनसिद्धित्रयकृतिकलने माञ्च शिष्यं न्ययुङ्क्त ॥ ३ ॥

उपधीकृत्य मामित्थं प्रवृत्त गुर्वनुग्रहः । सिद्धित्रयपरिष्कारमकार्षीत् महाटिप्पणम् ॥ ४ ॥
अस्तु यामुनसिद्धित्रयार्थाश्वादमुदोज्ज्वलः अनुग्रहोद्भवो नाथ श्रियै श्रीरङ्गलक्ष्मण ॥ ५
मुनये यामुनार्याय रङ्गलक्ष्मणयोगिने । संविदात्मेश्वरप्रख्यत्रिदण्डोद्भासिने नमः ॥६॥

उभयवेदान्तग्रन्थमालासंपादकः